# POLIO, QUIT INDIA!

Protect your child and the nation!
Participate in the mass
polio vaccination!




## December 7, 1997
## January 18, 1998

CALLING PARENTS!

Even if

- the child is indisposed or has diarrhoea
- the child had been given polio drops earlier

**TO ENSURE CENT PER CENT PROTECTION**



**Remember to**

Take your children (under 5) to the nearest immunisation booth / centre to receive

**TWO ADDITIONAL DROPS OF THE ORAL POLIO VACCINE on National Immunisation Days**



Be a part of the global Polio Eradication Campaign




**You don't just have to protect, but help eradicate POLIO**



# लब्धः धनस्यूतः

| | |
|---|---|
| सीता - अद्य वातावरणं बहु सम्यक् अस्ति खलु ? | The weather is fine today, isn't it ? |
| गीता - आम्, कुत्रापि विहारार्थं गच्छाम वा ? | Yes shall we go out somewhere ? |
| सी - अस्तु, भवती शीघ्रं सिद्धा भवतु । अहम् अपि सिद्धा भवामि । | Okay get ready soon, I will get ready in a few minutes. |
| गी - अस्तु, शीघ्रम् आगच्छतु । | Okay, come quickly. |
| सी - भवती सिद्धा वा ? वयं गच्छाम ? | Are you ready ? Shall we leave ? |
| (ते द्वे बहिः गच्छतः) | (They go out) |
| सी - पश्यतु भोः ! तत्र किमपि पतितम् अस्ति (तत् स्वीकृत्य) अहो ! एषः धनस्यूतः । अन्तः बहु धनम् अस्ति । | Look ! something has fallen there (picking it up) oh ! this is a purse. There is a lot of money in it. |
| गी - अन्तः नाम, दूरवाणीसंख्या, परिचयपत्रं वा अस्ति वा इति पश्यतु । | See if there is any name, phone number or a visiting card ? |
| सी - न, किमपि नास्ति । | No, there is nothing. |
| गी - तर्हि इदानीं वयं किं कुर्मः ? | Then what shall we do now ? |
| सी - अत्रैव किञ्चित्कालं प्रतीक्षां कुर्मः वा ? एतत् अन्विष्य कोऽपि आगच्छेत् । | Shall we wait here for some time ? Somebody may come looking for this. |
| गी - कोऽपि नागच्छति चेत् किं कुर्मः ? | What to do if nobody comes ? |
| सी - तदा आरक्षककार्यालयं प्रति गच्छाम । | Then we will hand it to the police station. |
| गी - पश्यतु ! कापि आगच्छन्ती अस्ति । सा किमपि अन्विष्यन्ती अस्ति इति भासते । गत्वा तां पृच्छाम । | Look ! somebody is coming. She seems to be searching for something. Let us talk to her. |
| सी - क्षम्यताम् । भवती किमपि अन्विष्यन्ती अस्ति किम् ? | Excuse me. Are you searching for something ? |
| राधा - आम् । मम धनस्यूतः नष्टः अस्ति । | Yes, I have lost my purse. |
| सी - एषः भवत्याः वा ? | Is this your's ? |
| रा - आं सत्यम् । एषः मम धनस्यूतः । एतस्य प्रत्यर्पणार्थं बहु धन्यवादाः । मम बहु धनं नष्टम् अभविष्यत् । | Yes indeed. This is mine. Thank you very much for returning it to me. I would have lost a lot of money. |

# नामनिर्वचनम् - २५

*(निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।)*

**रजनी** - रजन्ति (रञ्ज-रागे) प्रियाः भवन्ति यत्र सा रजनी = रात्रिः । [रञ्ज (रागे) + अनिः + ङीष्] या प्रीतिपात्रतां प्राप्नोति सा रजनी इति सामान्यार्थः । रजनीपदस्य रात्र्यर्थः तावत् सुप्रसिद्धः । हरिद्रा-सस्यविशेषादयः अन्ये अर्थाः अपि तस्य सन्ति ।

तद्यथा - 'रजनी नीलिनी-रात्रि-हरिद्रा-जतुकासु च' - (मेदिनी)

**रञ्जनी** - रज्यते अनया इति रञ्जनी । [रञ्ज (रागे) + ल्युट् + ङीप्] यस्याः कारणतः रागं = प्रीतिम्, अनुरागं प्राप्नुवन्ति जनाः सा रञ्जनी । सस्यविशेषे एतत् पदं रूढम् । अन्ये अर्थाः यथा - 'शुण्डा-रोचनिका-नीली-मञ्जिष्ठासु च रञ्जनी' - (मेदिनी)

**रञ्जिनी** - रञ्जयतीति रञ्जिनी । [रञ्ज (रागे) + णिनिः] या सर्वेषां मनः रञ्जयति सा रञ्जिनी भवति ।

**रमा** - रमयति इति रमा । [रमु (क्रीडायां) + णिच् + अच्] या सन्तोषयति, क्रीडयति सा रमा । विष्णोः पत्नी रमा तावत् लोके सर्वैः ज्ञायते एव । तथा हि कोषः - 'इन्दिरा लोकमाता मा रमा मङ्गलदेवता' (अमरः)

**रमाकान्तः** - रमायाः कान्तः = रमाकान्तः । लक्ष्म्याः पतिः इत्यर्थः । रमाकान्तः= विष्णुः । एवम् एव रमापतिः, रमानाथः इत्यादयः अपि ।

**रुक्मिणी** - रुक्मं सुवर्णम् अस्याः अस्ति इति रुक्मिणी । (रुक्म + इनिः + ङीप्) सुवर्णाभरणधारिणी इति सामान्यार्थः वक्तुं शक्यः । रुक्मिणी श्रीकृष्णस्य पत्नी । भीष्मकराजस्य पुत्री । महालक्ष्म्यवतारभूता अस्ति एषा । तथा हि श्लोकः - राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषानपायिनी ।। - (पद्मोत्तरखण्डः)

**सूचना** - *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

**सङ्केतः** - **संस्कृतचन्दमामा,** 'अक्षरम्' ८ क्रास्, गिरिनगरं, II फेस्, बेङ्गलूरु - ५६० ०८५

# कपिहस्तगतः मणिः

**आघ्रातं परिलीढमुग्रनखरैः क्षुण्णं च यच्चर्वितम् ।**
**क्षिप्तं यद् बत नीरसत्वकुपितेनेति व्यथां मा कृथाः ।**
**हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाग्रहात्**
**अन्तःसारविचारणव्यसनिना चूर्णीकृतं नाश्मना ।।**

कश्चित् वानरः कदाचित् एकं रत्नं प्राप्नोत् । तादृशं वस्तु इतः पूर्वं न दृष्टम् आसीत् तेन वानरेण । वस्तुस्वरूपं ज्ञातुम् इच्छन् वानरः प्रथमं रत्नस्य आघ्राणं कृतवान् । जिह्वया रसं परीक्षितवान् । नखैः तस्य त्वचः मोचनार्थं यत्नं कृतवान् । दन्तैः दंशनप्रयत्नम् अपि कृतवान् सः । एवं बहुधा प्रयत्ने कृते अपि रत्नस्य सारवत्त्वं तेन न ज्ञातम् । अन्ते कुपितः सः रत्नं क्षिप्तवान् । वानरस्य एतादृशं कृत्यं दृष्ट्वा खिन्नं रत्नम् उद्दिश्य कविः वदति - ''हे रत्न ! वानरस्य एतादृशात् व्यवहारात् खिन्नः मा भवतु भवान् । अन्तः किम् अस्ति इति ज्ञातव्यम् इति उद्देशेन सः कपिः शिलाखण्डेन भवन्तं न चूर्णीकृतवान् यत् तत् भवतः सौभाग्यम्'' इति ।

जात्या कपिः रत्नमूल्यं कथं वा जानीयात् ? खादनादिमात्रज्ञानवान् सः स्वयोग्यतानुगुणं रत्नपरीक्षां कृतवान् । तेन वानरेण यथा कृतं तथा बहुभिः क्रियते लोके ।

समाजसेवा, परोपकारः, सत्यवादिता इत्यादयः प्रशस्ताः गुणाः बहवः सन्ति । एते गुणाः यदि व्यक्त्या स्वव्यवहारे योज्यन्ते तर्हि जीवनं समृद्धं भवति । प्राचीनानां जीवनम् अत्र उदाहरणम् । किन्तु इदानीम् एतेषां गुणानां विषये जनाः किं चिन्तयन्ति ? 'एते गुणाः स्वायत्तीकृताः चेत् मम कीदृशः धनलाभः स्यात् ?', 'किम् एतेभ्यः मम पदवृद्धिः भवेत् ?', 'किम् एतैः अहं भोगसाधनं किमपि प्राप्तुं शक्नुयाम् ?', 'किम् एते गुणाः मम स्वार्थं पोषयन्ति ?' इत्येवं बहून् प्रश्नान् पृच्छन्ति । अर्थसम्बन्धमात्रं चिन्तयन्तः ते गुणान् तिरस्कुर्वन्ति । जीवनस्य अन्ते पुनः पश्चात्तापम् अनुभवन्ति - 'मम जीवनं समृद्धं न जातं, मम जीवनं तृप्तिकरं न जातम्' इति । भोगैकजीविनां पाश्चात्यानाम् अनुकरणं, परिश्रमे आनास्था इत्यादयः अवगुणाः मानवान् अर्थैकचिन्तने प्रवर्तयन्ति ।

वानरः रत्नं निस्सारं मत्वा क्षिप्तवान् आसीत् । किन्तु अधिकारमदमत्ताः, धनोन्मत्ताः केचन स्वेच्छाविहारिणः मणिसदृशानां सज्जनानां नाशने अपि प्रवृत्ताः दृश्यन्ते इति तु अहो दौर्भाग्यम् !



# चन्दमामा

## डिसेम्बर् -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'




## इतिहासगर्भस्था अपूर्वा शौर्यघटना

भवतां पत्रिका चन्दमामा भारतीयस्वातन्त्र्यसङ्ग्रमसम्बद्धम् आसक्तिजनक कथामालाद्वयं प्रकाशयन्ती अस्ति । तथापि कालगर्भे निहिताः स्वातन्त्र्यसङ्ग्रामकथाः अनन्ताः सन्ति एव ।

ब्रिटिष्प्रमुखाणां पुस्तकेभ्यः प्राचीनलेखनेभ्यः च इदानीं स्वातन्त्र्यसङ्ग्रामसम्बद्धाः बह्व्यः घटनाः प्राकाश्यं गच्छन्त्यः सन्ति, याश्च इतिहासगर्भे निलीनाः आसन् । तादृशी काचित् घटना, या च १८५५ तमे वर्षे (प्रथमस्वातन्त्र्यसङ्ग्रामस्य कर्षद्वयात् पूर्वम्) प्रवृत्ता, इदानीं प्रकाशिता अस्ति । विवरणं तु एवम् -

वीरभूमि(बीर्भूम्)नामके प्रदेशे 'सन्ताल'कुलीयाः जनाः वसन्ति स्म । ते १८५५ तमे वर्षे स्वस्य स्वातन्त्र्यम् अद्घोषितवन्तः । ते उक्तवन्तः -'वयं देवस्य पुत्राः, न कस्यापि दासाः' इति । एतत् उद्घोषणं न असहत - ईस्ट् इण्डियासंस्था । सा सन्तालकुलीयान् निर्दयं मर्दयितुं पीडयितुं च उद्युक्ता अभवत् । सन्ताल्जनाः महता परिश्रमेण यत् धनं सम्पादयन्ति स्म, अन्तिमां वराटिकाम् अपि अविहाय तत् धनं स्वायत्तीकरणीयम् इति ईस्ट् इण्डियासंस्थया प्रयत्नः कृतः ।

तया तेषां मर्दनार्थम् आश्रितः उपायः नितरां घोरः । सा पञ्चाशत् गजान् मद्यपानेन उन्मादितवती । ततः ते गजाः सन्ताल्जनवसतौ त्यक्ताः । ते च गजाः शतशः जनान् अमारयन् । पुरुषाः, महिलाः, बालाः, वृद्धाः चेति सर्वे गजैः मर्दिताः । एतेन क्रुद्धाः सहस्रशः सन्ताल्जनाः धनुर्धारिणः सन्तः कम्पनीजनान् अभिलक्ष्य बाणप्रयोगम् आरब्धवन्तः । कम्पनीजनाः तु गोलकास्त्रप्रयोगेण तान् मारितवन्तः । सन्ताल्जनाः असहायतया मरणं प्राप्नुवन्तः आसन् । तथापि ते भीताः तु न । तेषु एकैकः अपि भित्तिसदृशः सन् गोलकास्त्रार्थम् उरः प्रसारितवान् । अन्तिमपुरुषस्य मरणान्तं यावत् अपि एषा एव प्रवृत्तिः आसीत् तेषाम् ।

श्लाघनीयम् अस्ति खलु तेषाम् एषा स्वातन्त्र्यप्रियता, धैर्यप्रवृत्तिः च ।

सम्पुटः - १४ डिसेम्बर् - १९९७ सञ्चिका - ९

प्रतिकृतिमूल्यं रू.६.०० * वार्षिकं ग्राहकशुल्कं रू.७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुमोदकः - supporter
अन्तश्छदिः - inner roof (ceiling)
अपावेक्षमाणः - to watch unseen
अवसरः - occasion
आकर्षन् - pulling
आप्रपदीनम् - overcoat
उत्तापयन्ति - baking
उन्मत्तः - a mad man
कलिका - a bud
कार्यागारम् - factory
कालः - god of Death
गुलिका - bullet
जटा - a root that grows downwards from the banian tree.
तूष्णीम् - silent
दमयित्वा - after controling
दिनदर्शिका - calendar
निगडः - hand cuff
निगूह्य - hiding
निरोद्धुम् - to check
पादभागः - quarter
पादपरिमितः - feet
पुष्यति - blooms
प्रकाण्डः - a stem
प्रतिप्रस्थितवान् - returned (from a place)
प्रवाचकः - reader
भेदयन् - splitting
मानयित्वा - persuading
मेखला - girdle
मेदोलिप्ता - animal fat applied
यन्त्रमानवः - robot
याता - cousin
युगपत् - at a time
वितरतु - distribute
वितर्दिः - a platform
विभेदः - crack
वृक्षबहुलम् - a place where there are many trees
शलाका - stick
शुल्कम् - tax / rent
शूलम् आरोपितवन्तः - hanged
श्रान्तिः - tiredness
श्रितवान् - depended

वार्ताविशेषः -

# स्काट्लेण्ड्देशस्य पृथक् प्रजाप्रतिनिधिसभा

क्रि. श. १७०७ तमे वर्षे यूनियन्नियमः यदा विहितः तदारभ्य, तन्नाम सामान्यतः २९० वर्षेभ्यः स्काट्लेण्ड्प्रदेशः युनैटेड्किङ्गडम्-अङ्गभूतम् एव अस्ति । इंग्लेण्ड्लोकसभां प्रति इतः अपि प्रजाप्रतिनिधयः प्रतिनिर्वाचनं चीयन्ते, प्रेष्यन्ते च ।

यद्यपि पूर्णं स्वातन्त्र्यं न दीयेत तथापि पृथक् लोकसभा तु आवश्यकी इति बलवती अपेक्षा द्वितीयजागतिकमहायुद्धस्य अनन्तरं स्काट्लेण्ड्-प्रदेशे श्रुता आसीत् । तस्मिन् समये अधिकारं प्राप्तवतः लेबर्पक्षस्य सद्भावः आसीत् तद्विषये । तथापि तृतीयवारं यदा सः पक्षः अधिकारं प्राप्तवान् तदा एव सः स्काट्लेण्ड्प्रजानाम् अपेक्षाम् आसक्त्या परिशीलयितुं प्रयत्नं कृतवान् । १९७९ तमे वर्षे अस्मिन् विषये जनाभिप्रायसङ्ग्रहणकार्यं (रेफरण्ड्) कृतम् । ४०% प्रजाः एव एतस्याः अपेक्षायाः अनुमोदकाः आसन् इति कारणेन कन्सर्वेटिव्पक्षः ताम् अपेक्षां तिरस्कृतवान् ।

गते मे-मासे प्रवृत्ते निर्वाचने लेबर्पक्षः पुनः अधिकारं प्राप्तवान् । नूतनः प्रधानमन्त्री टोनिब्लेयर् 'पुनः जनाभिप्रायसङ्ग्रहः करणीयः' इति प्रकटितवान् । तदनुसारं सप्टेम्बर्मासस्य ११ दिनाङ्के प्रवृत्ते जनाभिप्रायसङ्ग्रहणकार्यक्रमे ७४.३% जनाः पृथक् लोकसभायाः अपेक्षां पुरस्कुर्वन्तः मतं दत्तवन्तः सन्ति । इदानीन्तन-योजनानुगुणं १९९९ तमे वर्षे तत्र पुनः निर्वाचनं भविष्यति । पश्चात् क्रि.श.२००० तमे वर्षे पृथक् स्काटिष्लोकसभा भविष्यति ।

सामान्यतः ३०० वर्षेभ्यः पूर्वं स्काट्लेण्ड्मध्ये पृथक् लोकसभा आसीत् । १३-१४ शतकयोः इंग्लेण्ड्स्काट्लेण्ड्देशयोः मध्ये युद्धं प्रवृत्तम् । १६२७ तमे वर्षे इंग्लेण्ड्देशः औपचारिकतया स्काट्लेण्ड्देशस्य स्वातन्त्र्यम् अङ्गीकृतवान् । किन्तु तेन देशद्वये अपि शान्तिः समाधानं च न आसीत् । १६३७ तमे वर्षे स्काट्लेण्ड्मध्ये विद्रोहः आरब्धः । इंग्लेण्ड्देशस्य जनरल्काम्बेलः न्यू माडेल् सैन्यं नीत्वा विद्रोहं शमयित्वा १६६० तमे वर्षे स्काट्लेण्ड्देशं जितवान् । १७०७ तमे वर्षे स्काट्लेण्ड्देशः इंग्लेण्ड्देशस्य अधीनः अभवत् ।

अधिकारस्य विकेन्द्रीकरणेन यूनियन्मध्ये आर्थिकरोगग्रस्थता भवेत् इति केचन विचारशीलाः अभिप्रायं प्रकटितवन्तः सन्ति । पृथक् लोकसभा स्काटिष्स्वातन्त्र्यस्य प्रथमं सोपानम् इति ते भावयन्ति । स्काट्लेण्ड्प्रदेशस्य अनन्तरम् अधुना वेल्स्मध्ये अपि "पृथक् लोकसभा आवश्यकी" इति विषये जनाभिप्रायसङ्ग्रहः कृतः अस्ति ।

तत्रत्यं फलितांशं दृष्टवन्तः केचन राजकीयविमर्शकाः अस्य शतकस्य अन्ते इदानीन्तनं युनैटेड् किङ्गडम् न भवेत् इति वदन्तः सन्ति ।





# वादिराजस्य अपेक्षा

चन्द्रपुरनामके उपमण्डले अनेके ग्रामाः आसन् । तेषु शकटपल्ली अपि अन्यतमा । तस्मिन् ग्रामे अग्रहारे केशवभट्टः नाम कश्चित् पुरोहितः निवसति स्म । आजानुबाहुशरीरं, कर्णयोः सुवर्णाभरणं, मुखे दिव्यतेजः, शुद्धवाक्पटुत्वम् इत्येतैः गुणांशैः युक्तः सः न केवलम् अग्रहारे, अपि तु तस्मिन् उपमण्डले एव उत्तमख्यातिं प्राप्तवान् आसीत् । सर्वेषु अपि गृहेषु शुभकार्यसमये केशवभट्टेन एव अग्रस्थानं प्राप्यते स्म । यः कोऽपि अन्येभ्यः दानकरणसमये एतं पृष्ट्वा एव ददाति स्म । गच्छता कालेन केशवभट्टस्य सम्पादनं त्रिगुणितं प्रवृद्धम् ।

एतादृशस्य धनिकस्य केशवभट्टस्य एका एव पुत्री आसीत् । तस्याः नाम शारदा इति । सुन्दरी शारदा पितुः शास्त्रज्ञानं, मातुः सङ्गीतज्ञानं च प्राप्य प्रवृद्धा आसीत् । विनयशीला, गृहकार्यकुशलिनी चापि आसीत् सा ।

केशवभट्टस्य अपारसम्पत्तेः उत्तराधिकारिणी शारदा एव इति ग्रामे सर्वे जानन्ति स्म । अतः बहवः तरुणाः तां परिणेतुम् इष्टवन्तः । एतं विषयं ज्ञातवान् केशवभट्टः - ''मम जामाता पौरोहित्यज्ञानसम्पन्नः, धनिकः, सुन्दरश्च भवेत् । अहं तं जामातरं विवाहानन्तरं मम गृहे एव स्थापयिष्यामि । स्वपौरोहित्यं तस्य वशं कर्तुम् इच्छामि च'' इति द्वित्राणि मित्राणि उक्तवान् । एतस्य परिणामतः सर्वत्र वार्ता प्रसृता यत् 'जामातृविषये केशवभट्टस्य महत्यः अपेक्षाः सन्ति' इति ।

एकदा अग्रहारस्य पार्श्वे विद्यमाने कोप्पलग्रामे केशवभट्टस्य बन्धुगृहे कश्चित् विवाहः सम्पन्नः । कार्यान्तरव्यग्रताकारणतः केशवभट्टः तत्र गन्तुम् अशक्तः

'अनामिका'

जातः । अतः सः पत्नीं पुत्रीं च शकटेन प्रेषितवान् ।

तं विवाहं वरस्य स्नेहितः वादिराजः अपि आगतः आसीत् । विद्यासम्पन्नः सः अर्थशास्त्रे विशेषपाण्डित्यं प्राप्तवान् आसीत्। धनसम्पद्विहीनः सः चन्द्रपुर-उपमण्डलप्रमुखस्य ज्ञानभास्करस्य कार्यालये कार्यं कुर्वन् मात्रा सह वसति स्म । कोप्पलग्रामे प्रचलन् विवाहः वादिराजस्य आत्मीयमित्रस्य एव आसीत् ।



विवाहार्थम् आगतासु महिलासु शारदा नक्षत्रेषु चन्द्रमाः इव विराजते स्म । तां दृष्ट्वा नितराम् आकृष्टः जातः वादिराजः । जीवने ऐदम्प्राथम्येन विवाहविषये आसक्तिं प्राप्तवान् वादिराजः । सः स्वस्य अपेक्षां मित्रं राकेशं निवेदितवान् ।

राकेशः श्यालेन सह एतस्मिन् विषये सम्भाषणं कृत्वा वादिराजम् एवम् उक्तवान् - ''सा पुरोहितस्य केशवभट्टस्य एकमात्र-पुत्री । जामातृयोग्यताविषये केशवभट्टस्य बह्व्यः अपेक्षाः सन्ति । अतः एतस्य विषयस्य विस्मरणम् एव वरम्'' इति ।

मित्रस्य वचनानि श्रुतवतः वादिराजस्य मनसि अपि भावना आगता यत् मम अपेक्षा सफला न भवेत् इति । 'अहं यद्यपि सुलक्षणः, तथापि धनिकः तु न । पौरोहित्ये अपि मम ज्ञानं शून्यमेव । मम केशवभट्टस्य च अपेक्षाः परस्परं विभिन्नाः सन्ति । एकस्य अपेक्षायाः साफल्यार्थम् अन्येन अपेक्षा विस्मरणीया एव भवति' इति चिन्तितवान् सः ।

एवं चिन्तितवान् वादिराजः - 'शारदा परिणेतव्या' इत्येतां स्वस्य अपेक्षां मनसि एव निगूह्य चन्द्रपुरं प्रति गतवान् ।

केषाञ्चित् दिनानाम् अनन्तरम् आश्वयुजमासः सम्प्राप्तः । चन्द्रपुरउपमण्डलप्रमुखस्य गृहे शरन्नवरात्रोत्सवः आरब्धः । उत्सवसमाप्तेः अनन्तरदिने एव प्रमुखस्य ज्ञानभास्करस्य षष्ट्यब्दपूर्तिकार्यक्रमः करणीयः इति निश्चितम् आसीत् । तं कार्यक्रमं प्रति प्रधानपुरोहितत्वेन कुटुम्बसमेतम् आगन्तव्यम् इति केशवभट्टः विशेषानुरोध-पुरस्सरं निमंन्त्रितः आसीत् । अतः केशवभट्टः पत्नीपुत्रीभ्यां सह चतुर्भ्यः दिनेभ्यः पूर्वमेव चन्द्रपुरं प्राप्तवान् ।

गतवर्षद्वयतः विभिन्नेषु अवसरेषु वादिराजस्य सत्यप्रियतां, व्यवहारकौशलं च



परिशीलितवतः केशवभट्टस्य अभिमानः अपि तस्मिन् उत्पन्नः ।

अनन्तरदिने केशवभट्टस्य वचनानुसारं वादिराजः पूजामण्डपस्य अलङ्कारं यथायोग्यं कृत्वा दर्शितवान् । सन्तुष्टः केशवभट्टः - ''वादिराज ! मण्डपं बहु सुन्दरम् अस्ति'' इति उक्तवान् ।

केशवभट्टस्य श्लाघनवचनानि श्रुत्वा वादिराजेन सह पार्श्वे स्थितः कर्मकरः हरिः अपि सन्तोषम् अनुभवन् यज्ञवेदिकां च नमस्कुर्वन् - ''स्वामिन् ! शुभमुहूर्ते देवं सम्प्रार्थ्य आरब्धं कार्यम् उत्तमम् एव भविष्यति'' इति उक्तवान् ।

तत् वचनं श्रुत्वा वादिराजः श्रीहरिं पश्यन् - ''तर्हि केभ्यश्चित् दिनेभ्यः पूर्वं भवता रामस्य गृहनिर्माणं यत् कृतं तत् किम् अशुभे मुहूर्ते कस्यचित् भूतस्य स्मरणं कृत्वा आरब्धम् ?'' इति उपहासपूर्वकं पृष्टवान् ।

एतं प्रश्नं श्रुतवतः श्रीहरेः मुखम् अवमानेन म्लानं जातम् । वस्तुस्थितिः का इति केशवभट्टेन न ज्ञातम् । अतः सः वादिराजस्य मुखं प्रश्नार्थकदृष्ट्या दृष्टवान् ।

तदा वादिराजः केशवभट्टम् उद्दिश्य - ''रामः कश्चित् दरिद्रकृषिकः । पुत्राय गृहं निर्मातव्यम् इति चिन्तयन् सः महता कष्टेन धनसङ्ग्रहणं कृतवान् । सः रामः श्रीहरेः बन्धुः अपि । गृहनिर्माणस्य दायित्वं श्रीहरये दत्त्वा - 'अल्पव्ययेन गृहं यथा निर्मितं भवेत् तथा द्रष्टव्यं भवता' इति निवेदितवान् । तदा यदि एषः 'न शक्यते' इति सुस्पष्टम् अवदिष्यत् तर्हि सम्यक् अभविष्यत् । परन्तु एषः विनावचनं गृहनिर्माणकार्यम्

अवलोकितवान् आसीत् चन्द्रपुर-उपमण्डलप्रमुखः । अतः सः वादिराजम् आहूय तस्य नामादिकं केशवभट्टं निवेद्य वादिराजम् उक्तवान् - ''वादिराज, अद्य आरभ्य षष्ट्यब्दकार्यक्रमस्य समापन-पर्यन्तम् अपि केशवभट्टेन सह एव भूत्वा भवान् तस्य वचनानुसारं सर्वसिद्धताः अपि करोतु । तस्य किञ्चित् अपि असन्तृप्तिः न भवेत् । एतदर्थं भवान् मम आप्तकार्यदर्शितः द्विसहस्रं रूप्यकाणि स्वीकरोतु । एतेषां कार्याणां निमित्तं तस्य उपयोगं करोतु च'' इति ।

उपमण्डलप्रमुखस्य अभिमानपात्रस्य वादिराजस्य विषये केशवभट्टस्य मनसि किञ्चिदिव कुतूहलम् उत्पन्नम् । दिनद्वयाभ्यन्तरे तस्य व्यवहारं कार्यदक्षतां च

अङ्गीकृतवान् । किन्तु अनन्तरकाले कथञ्चित् असमीचीनक्रमेण गृहं निर्मितवान् । तावदेव न, यदा रामः 'किम् एतत् ?' इति पृष्टवान्, तदा एषः उपहासपूर्वकं 'धनानुगुणं फलम्' इति उक्तवान् । इदानीम् अत्र 'उपमण्डल-प्रमुखेण प्रभूतं धनं दीयते' इत्यतः सुन्दरीं वेदिकां निर्मितवान् अस्ति । भवतः अभिमानपात्रतां प्राप्तुम् अन्यत् एकं कारणं वदन् अस्ति'' इति उक्तवान् ।

सर्वं श्रुत्वा केशवभट्टः खण्डनदृष्ट्या श्रीहरिं पश्यन् किमपि वक्तुम् उद्युक्तः । तावता वादिराजः - ''पश्यतु श्रीहरे ! भवान् अपि किञ्चित् विद्याभ्यासं कृतवान् अस्ति । अनन्ते एतस्मिन् कालचक्रे विद्यमानानि सर्वाणि दिनानि अपि शुभदिनानि एव । अशुभदिनम् एकम् अपि नास्ति । एतं विषयं सर्वान् ज्ञापयितुम् एव विघ्नेशः चतुर्थ्यां, श्रीकृष्णः अष्टम्यां च जन्म प्राप्तवन्तौ स्तः । किञ्चित् कार्यम् आरब्धुं सफलतां प्राप्तुं च चित्तशुद्धिः एकाग्रता च आवश्यकी, न अन्यत् इति इदानीं वा जानातु'' इति उक्तवान् ।

वादिराजस्य वचनं श्रुत्वा आत्मनः कृत्यं समर्थयितुं सर्वथा अशक्तः श्रीहरिः शिरः अवनमय्य ततः निर्गतवान् ।

तदा केशवभट्टः चिन्तयन्, शिरः चालयन् पृष्टवान् - ''वादिराज ! किमपि कार्यं कदापि आरब्धुं शक्यते इति भवतः अभिप्रायः किम् ?'' इति ।

मौनेन सावधानं चिन्तयन् वादिराजः - ''स्वामिन् ! मम अभिप्रायाः विश्वासाः च गृहपुरोहितस्य भवतः मनसि क्लेशजनकाः यदि जाताः स्युः तर्हि कृपया अहं क्षन्तव्यः । इदानीन्तनाः जनाः सर्वम् अपि स्वलाभदृष्ट्या एव पश्यन्ति । एतस्य उत्तमम्



इति उक्तवान् वादिराजः ।

''उत्तमं वादिराज ! कयाचित् दृष्ट्या आवां द्वौ परस्परं दक्षिणोत्तरध्रुवतुल्यौ चेत् अपि विवेकयुक्तानि भवतः वचनानि माम् आकृष्टवन्ति सन्ति'' इति उक्तवान् ।

तत् वचनं श्रुत्वा एकक्षणं वादिराजस्य मुखे कश्चित् प्रकाशः दृष्टः । अनुक्षणं किमपि वक्तुम् उद्युक्तः वादिराजः प्रयत्नपूर्वकं आत्मानं निगृह्य मौनेन स्थितवान् ।

तत् अवलोकितवान् केशवभट्टः - ''किं तत् वादिराज ? किं वक्तुम् इच्छति भवान् ? वदतु धैर्येण'' इति उक्तवान् ।

तदा वादिराजः सङ्कोचेन शिरः अवनमय्य - ''विशेषः कोऽपि नास्ति । 'भवतः वचनैः अहम् आकृष्टः' इति भवान् उक्तवान् । मम अपेक्षा अपि यदि भवतः अपेक्षां वशीकुर्यात् तर्हि कियत् सुन्दरम् अभविष्यत् इति वक्तुम् उद्युक्तः आसम् । तावदेव'' इति उक्तवान् ।

तत् श्रुत्वा केशवभट्टः आश्चर्येण - ''किम् एतत् 'भवतः अपेक्षा', 'मम अपेक्षा' इत्यादिकम् ?'' इति पृष्टवान् ।

तदा वादिराजः स्वस्य इच्छां विस्तरेण निवेद्य - ''भवतः पुत्री शारदा सर्वदृष्ट्या अपि योग्या युवतिः । परन्तु एका एव पुत्री इति कारणतः 'भावी जामाता एवम् एव भवेत्, मम गृहे एव तिष्ठेत्' इति अपेक्षा-करणम् अयुक्तम् एव खलु ?'' इति उक्तवान् ।

तस्य वचनानि श्रुत्वा हसन् केशवभट्टः - ''वत्स । अपेक्षा भवतः अस्ति, न मम ।



उदाहरणं श्रीहरिः एव । एतस्यां परिस्थितौ आचारनियमेभ्यः अपि नीतिनियमाः एव श्रेष्ठाः । 'साक्षात् भगवान् अपि उत्तमतां निःस्वार्थतां च दृष्ट्वा मङ्गलम् एव करिष्यति' इति ज्ञापनं विद्यावताम् अस्माकं कर्तव्यम् अस्ति'' इति उक्तवान् ।

''तन्नाम मुहूर्तादिदर्शनम् अयुक्तम् इति वा भवतः आशयः ?'' इति पृष्टवान् केशवभट्टः ।

''न तथा । मूहूर्तादिदर्शनं भवतु नाम । तेनैव सह नीतियुक्तः व्यवहारः अपि भवतु । अन्याय्यादिमार्गेण कार्यकरणात् प्राप्तस्य असाफल्यस्य कारणं मुहूर्तादिकम् उच्यते यत् तत् अनुचितम् । स्वदोषस्य निगूहनं कृत्वा व्याजकथनम् अनुचितम् । मुहूर्तादीनां दुरुपयोगः सर्वथा अनुचितः''

भवदपेक्षायाः विरुद्धा अपेक्षा काऽपि मम नास्ति'' इति उक्तवान् ।

तदा वादिराजः अत्याश्चर्येण - ''विद्यमाना पुत्री एका एव इत्यतः जामातृचयने भवता बहवः नियमाः विहिताः इति बहूनां मुखात् मया श्रुतं खलु'' इति उक्तवान् ।

तदा केशवभट्टः हसन् - ''पुत्री एका भवतु, दश वा भवन्तु, विवेकिनः पितुः अपेक्षा एका एव भवति । सा तु - 'सद्गुणी जामाता प्राप्येत, पुत्री सुखेन जीवनं कुर्यात्' इति । यथा गुडं परितः पिपीलिकाः भवन्ति तथैव मम सम्पत्तिं दृष्ट्वा अनर्हाः बहवः मम समीपं न आगच्छेयुः इति मत्वा अहं तादृशं नियमविधानरूपम् अस्त्रं प्रयुक्तवान्'' इति उक्तवान् ।

भट्टस्य वचनं श्रुत्वा सन्तुष्टः वादिराजः - ''तर्हि...'' इति किमपि वक्तुम् यावत् उद्युक्तः तावता एव शारदया सह आगता भट्टस्य पत्नी - ''पूजामण्डपं द्रष्टुम् आवाम् आगतवत्यौ'' इति उक्तवती ।

तदा भट्टः हसन् - ''विवाहमण्डपम् अपि सिद्धम् अस्ति । गत्वा पश्यताम्'' इति उक्त्वा आश्चर्येण पश्यन्त्यै पत्न्यै वादिराजं प्रदर्श्य - ''वादिराजः, तत्सदृशः कुशली युवकः वा यदि अस्माकं जामाता भवेत् तर्हि शोभनं स्यात् इति ह्यः रात्रौ अहं भवतीं वदन् आसं खलु ? सः एव वादिराजः एषः'' इति उक्तवान् । पुत्रीं प्रीत्या पश्यन् - ''शारदे ! कोप्पलग्रामे प्रवृत्ते विवाहे एतस्य परिचयः जातः अस्ति किल ! ह्यः रात्रौ भवत्याः मात्रा सह यदा अहम् एतस्मिन् विषये सम्भाषमाणः आसं तदा भवती पार्श्वप्रकोष्ठतः कुतूहलेन पश्यन्ती आसीत् खलु । तदा दृष्टं भवत्याः मुखम्, इदानीन्तनं लज्जापूर्णं भवत्याः मुखं च समानं दृश्यते'' इति उक्तवान् ।

पितुः वचनात् इतोऽपि लज्जया शिरः अवनमय्य स्थितवती शारदा । तत् दृष्ट्वा केशवभट्टः आनन्देन - ''भोः वादिराज ! भवतः अपेक्षा पूर्णा जाता खलु ?'' इति पृष्टवान् ।

भाविश्वशुरस्य वचनं श्रुत्वा वादिराजः अपि लज्जाम् अनुभवन् - ''आम् । इतःपरं भवतः अपेक्षाम् अपि निश्चयेन साधयिष्यामि'' इति उक्तवान् ।



# नेयदीपः शुकपञ्जरं च

गुरुपुरस्य गोपालः सुरपुरस्य श्रीहर्षः च आत्मीयौ स्नेहितौ आस्ताम् । उभयोः अपि सुरापानस्य व्यसनम् आसीत् । यदा अवसरः प्राप्यते स्म तदा उभौ अपि उभयोः अन्यतरस्य गृहे मद्यं पिबन्तौ उपविशतः स्म ।

एकदा गोपालः श्रीहर्षाय वार्तां प्रेषितवान् - ''मित्र ! मम पत्नी मातृगृहं गतवती अस्ति । गृहे मद्यस्य न्यूनता तु नास्ति एव । अतः अद्य रात्रौ भवान् आगच्छति चेत् सुरापानं कृत्वा आनन्दम् अनुभोक्तुं शक्ष्यावः'' इति । रात्रौ श्रीहर्षः गोपालस्य गृहं प्रति प्रस्थितवान् । तावति काले एव अन्धकारः प्रसृतः इति कारणेन नेयदीपं स्वीकृतवान् श्रीहर्षः । तस्यां रात्रौ उभौ अपि यथेष्टं सुरापानं कृतवन्तौ । अनन्तरं श्रीहर्षः स्वकीयं नगरं प्रति प्रस्थितवान् । मध्यरात्रसमये अरण्यमार्गे गच्छन् गर्ते गुल्मे वा अपतन् नेयदीपस्य साहाय्येन गृहं प्राप्य, घोरिकां कुर्वन् निद्रितवान् श्रीहर्षः ।

सूर्योदयात् पूर्वम् एव गोपालस्य सेवकः आगत्य, द्वारं ताडयित्वा श्रीहर्षम् उत्थापितवान् । तस्मै गोपालेन दत्तं पत्रं दत्तवान् च । तस्मिन् पत्रे - ''मित्र ! भवान् रात्रौ अरण्यमार्गे सर्पस्य वृश्चिकस्य वा दंशनं विना गृहं सुखेन प्राप्तवान् इति भावयामि । ह्यः भवान् नेयदीपं मत्त्वा मम गृहस्य शुकपञ्जरं नीतवान् अस्ति । भवदीयं नेयदीपम् अधुना प्रेषितवान् अस्मि । भवान् शुकपञ्जरं प्रेषयतु एतेन सह । यदि मम पत्नी भवता नीतं तं शुकपञ्जरं अद्रक्ष्यत् तर्हि मम गृहे महान् कोलाहलः एव अभविष्यत् । अतः अद्य आरभ्य आवां सुरापानं त्यक्त्वा सुखेन जीवाव'' इति लिखितम् आसीत् ।





# सम्राट् अशोकः
## १०

*(पितुः आज्ञानुसारम् अशोकः उज्जयिन्याः राजप्रतिनिधिः सन् उत्तमरीत्या राज्यपरिपालनं कुर्वन् आसीत् । राजधान्यां पाटलीपुत्रे वृद्धस्य बिन्दुसारस्य स्थितिः चिन्ताजनिका अभवत् । अतः तक्षशिलायां विद्यमानः सुषेणः, उज्जयिन्यां विद्यमानः अशोकः च आह्वातव्यौ इति प्रधानमन्त्री, सेनाधिपतिः, राजपुरोहितः च मिलित्वा चिन्तितवन्तः । सुषेणस्य प्रयाणे विघ्नं जनयितुम् आशोकस्य श्यालः यशः नर्तक्यौ तक्षशिलां प्रति प्रेषितवान् । तदनन्तरम् ...)*

मृगयार्थं वनं गतः अशोकः सायं प्रासादं प्रत्यागत्य - ''मृगयया बहु श्रान्तः जातः अस्मि'' इति पत्नीम् उक्तवान् ।

तदा विदिशा उक्तवती - ''आर्यपुत्र ! अधुना भवतः केवलं शारीरकी श्रान्तिः अस्ति । प्राणिनां, पक्षिणां च मारणेन भवता अनुभविष्यमाणायाः मानसिक-वेदनायाः प्रतीक्षायाम् अहम् अस्मि'' इति ।

तदा अशोकः उक्तवान् - ''देवि ! किम् एवं वदति भवती ? राज्यव्यवहारे मग्नस्य मम मनसः सन्तोषः मृगयायाः ऋते अन्येन केन वा लभ्यते ? अहं मांसार्थं तु प्राणिनः न मारयामि'' इति ।

''प्राणिनां हननेनैव भवतः सन्तोषः भवति इति तस्य तात्पर्यं खलु । स्वसन्तोषार्थम् अन्येषां पीडनं, हननं च महते पापाय । भवान् तादृशं पापं न आचरेत् इति



मम अपेक्षा'' इति उक्तवती विदिशा ।

''अद्य अहम् एकं महाव्याघ्रं, कश्चित् तरक्षुं च मारितवान् । तादृशानां क्रूरमृगाणां मारणेन अनेके साधुप्राणिनः रक्षिताः भवन्ति खलु ? अतः मम कार्यं पापदायकम् इति अहं न भावयामि'' इति उक्तवान् अशोकः ।

अशोकस्य वचनं सर्वं सहनया श्रुत्वा विदिशा - ''प्रभो ! भवतः चिन्तनं युक्तमेव । किन्तु भवान् जानीयात् एव यत् क्रूरप्राणिनः अपि कदापि स्वसन्तोषार्थम् अन्यान् प्राणिनः न मारयन्ति, अपि तु स्वस्य उदरस्य पूरणार्थमेव इति । प्राणिनः तु युक्तायुक्ततां धर्माधर्मं वा न जानन्ति । अतः ते अन्यप्राणिनः मारयन्ति यत्, तत् तु सहजमेव । यतः जीवनार्थं तेषाम् आहारः आवश्यकः एव । मनुष्यः तु जीवितुं बहून् मार्गान् जानाति । अतः विवेकी पुरुषः एतादृशानि कार्याणि न कुर्यात्'' इति शान्ततया उक्तवती ।

पत्नीं प्रतिवक्तुम् अशक्तः अशोकः केवलं मन्दहासं प्रदर्शितवान् । तदा कश्चित् परिचारकः आगत्य अशोकं प्रणम्य - ''वाराणसीतः कश्चित् दैवज्ञः आगतः अस्ति । भवतः दर्शनाकाङ्क्षी सः स्वागत-प्रकोष्ठे उपविष्टः अस्ति'' इति उक्तवान् ।

''दैवज्ञः कश्चित् उपस्थितः अस्ति ?'' इति आश्चर्येण पृष्टवती विदिशा ।

''आम् । अहं भवतीं वक्तुम् एव विस्मृतवान् आसम् । सः दैवज्ञः न केवलं भविष्यकथने निपुणः, अपि तु भविष्ये यत् साधनीयं तदर्थं सुलभं मार्गम् अपि सूचयति सः । महाकालस्य दर्शनार्थं सः आगतः अस्ति इति नगरस्य प्रसिद्धः वणिक् ललितदत्तः मां सूचितवान् आसीत् । अतः अहम् एव तम् आहूतवान् अस्मि'' इति वदन् अशोकः ततः बहिः गतः ।

आगतम् अशोकं दृष्ट्वा दैवज्ञः, ललितदत्तः च उत्थितवन्तौ । दैवज्ञः दीर्घं काषायवर्णीयम् आप्रपदीनं धृत्वा ललाटे बृहत् कुङ्कुमस्य तिलकं धृतवान् आसीत् ।

यदा अशोकः उपविष्टः तदा दैवज्ञः कमपि मन्त्रं जपित्वा - ''दक्षिणहस्तं प्रसारयतु'' इति अशोकम् उक्तवान् । किञ्चित्कालं तस्य हस्तस्य रेखाः दृष्ट्वा पुनश्च नेत्रे निमील्य किञ्चित्समयानन्तरं नेत्रोद्घाटनं कृत्वा - ''भवतः शुभसमयः सन्निहितः अस्ति'' इति हसन् उक्तवान् ।

''किंनिमित्तः शुभसमयः ?'' इति पृष्टवान् अशोकः ।

''स्वस्य स्वतन्त्रतां प्रकटयितुम्'' इति उक्तवान् दैवज्ञः ।

''कस्मात् स्वतन्त्रता मम ?'' इति आश्चर्येण पृष्टवान् अशोकः ।

''भवता अवन्तीदेशस्य राजत्वं प्राप्तुं समयः सन्निहितः अस्ति । अवन्तीदेशः स्वतन्त्रः इति उद्घोष्य भवान् स्वयं पट्टाभिषिक्तः भवितुम् अर्हति'' इति उक्तवान् दैवज्ञः ।

''तेन मगधाधिपतेः मम पितुः विरोधः कृतः भविष्यति । सः विद्रोहः एव भविष्यति खलु'' इति उक्तवान् अशोकः ।

''राजपदं प्राप्तुं विद्रोहात् ऋते अन्यः मार्गः नास्ति । अतः तस्य अनुसरणं न दोषाय । पाटलीपुत्रे भवतः पितुः स्थितिः चिन्ताजनिका अस्ति अपि । युवराजः सुषेणः राज्ञः उत्तराधिकारी भवेत् इति सर्वे निर्णीतवन्तः सन्ति'' इति उक्तवान् दैवज्ञः ।

''मम पितुः स्थितिः चिन्ताजनिका अस्ति किम् ?'' इति चिन्तामिश्रितेन स्वरेण पृष्टवान् अशोकः ।

''सत्यमेव ! अतः भवता अधुना पाटलीपुत्रं प्रति न गन्तव्यम् । भवान् तत्र गच्छति चेत् भवतः प्राणाः रक्षिताः न भविष्यन्ति । एकवर्षपर्यन्तम् उज्जयिनीतः अन्यत्र गमनं भवतः क्षेमकरं न भविष्यति'' इति उक्तवान् दैवज्ञः ।

तावता पार्श्वतः कश्चन शब्दः श्रुतः । वातायनात् कश्चित् अन्तः अपावेक्षमाणः इव दृष्टः । अनुक्षणम् अशोकस्य मुखं कोपेन



रक्तं जातम् । परम् अन्तः प्रविष्टवन्तं यशं दृष्ट्वा प्रसन्नः सः - ''आगच्छतु मित्र ! आगच्छतु । वातायनतः अपावेक्षणरूपं साहसकार्यं कः वा कृतवान् इति चिन्तयन् आसम्'' इति हसन् उक्तवान् ।

''तर्हि आवां गच्छावः'' इति उक्तवान् ललितदत्तः अशोकं पश्यन् ।

''एकं पदम् अपि अग्रे न गन्तव्यम्'' इति उक्तवान् यशः स्वकोषात् खड्गम् आकर्षन् ।

''युवराजस्य पुरतः एव तस्य अतिथीनाम् एतादृशम् आतिथ्यं किम् ?'' इति खेदेन पृष्टवान् दैवज्ञः ।

''एतस्मात् भिन्नं कीदृशं वा आतिथ्यं कर्तुं शक्यते शत्रोः गूढचरस्य ?'' इति वदन् दैवज्ञस्य हस्तं दृढतया गृहीत्वा - ''भोः



शिखरसेन ! अहं कः इति भवान् न जानीयात् । परं भवान् कः इति अहं सम्यक् जानामि । पाटलीपुत्रे सुषेणस्य अनुजैः सह अटन्तं भवन्तम् अहं दृष्टवान् अस्मि'' इति उक्तवान् यशः ।

तत् श्रुतवतः दैवज्ञस्य मुखं म्लानं जातम् । ललितदत्तस्य तु शरीरे भयेन कम्पनम् अपि आरब्धम् ।

''कः तत्र ?'' इति वदन् यदा यशः करताडनं कृतवान् तदा अनुक्षणं द्वौ रक्षकौ तत्र आगतौ ।

''एतयोः दुष्टयोः हस्तपादबन्धनपूर्वकं कारागृहे स्थापनार्थं भवतः अनुमतिं प्रार्थये'' इति यशः अशोकम् उक्तवान् ।

अशोकः अङ्गीकारपुरस्सरं शिरः चालितवान् । रक्षकौ तौ द्वौ अपि बद्ध्वा नीतवन्तौ ।

''पाटलीपुत्रे राज्ञः स्थितिः बहु शोचनीया जाता अस्ति । भवान् पाटलीपुत्रं यथा न गच्छेत् तथा करणम् एव एतयोः दुष्टयोः योजना आसीत् । राज्ञः मरणानन्तरं भवान् राजा न भवेत् इत्येव तेषां चिन्तनम् । भवतः सहोदराः केऽपि भवतः पक्षे न सन्ति । ते सर्वे भवते असूयन्ति । यदि भवान् अवन्तीप्रदेशस्य राजा भवेत् तर्हि मगधसिंहासने भवतः दृष्टिः न भवेत् इति तेषां मूर्खाणां चिन्तनम् । अयं शिखरसेनः पाटलीपुत्रे सुषेणस्य प्रतिनिधिः सन् वसन् सर्वाः वार्ताः तक्षशिलां प्रापयति स्म'' इति उद्वेगेन उक्तवान् यशः।

पश्चात् यशः पाटलीपुत्रे अशोकस्य मातापितृभ्यां सह आत्मना कृतं सम्भाषणं, राज्ञः अनारोग्यकारणेन राजधान्यां राजकीय-व्यवहारे जातान् परिणामान् च विस्तरेण अशोकं निवेदितवान् ।

''अपि च मित्र ! भवता अनुक्षणम् एव पाटलीपुत्रं प्रति प्रस्थातव्यम् । मगधसाम्राज्यस्य, प्रजानां च हितं चिन्तयन्तः सेनाधिपतिः, प्रधानमन्त्री, राजपुरोहितः च - 'भवान् एव राज्ञः उत्तराधिकारित्वेन नियोजनीयः' इति चिन्तितवन्तः सन्ति । स्वार्थिनः केचन अधिकारिणः स्वलाभार्थं सुषेणं राजानं कर्तुं प्रयतमानाः सन्ति । किन्तु यः पाटलीपुत्रं प्रथमं प्राप्नोति तस्य एव 'राजा' भवितुम् अधिकाः अवकाशाः सन्ति'' इति पुनश्च उक्तवान् यशः ।

यशस्य वचनं श्रुत्वा अशोकः गम्भीरः

अभवत् । मौनेन उपविष्टस्य तस्य मनसि विभिन्नाः विचाराः आगताः ।

तदा तत्र आगता विदिशा यशं दृष्ट्वा - ''अहो अग्रज ! नमस्काराः । भवान् कदा आगतः पाटलीपुत्रात् ? भवतः आगमनस्य वार्ताम् अहं न ज्ञातवती एव खलु ?'' इति उक्तवती सन्तोषेण मन्दहासं प्रदर्शयन्ती ।

''अनुजे ! इदानीम् एव आगतः अस्मि'' इति उत्तरं दत्तवान् यशः ।

तदा विदिशा अशोकम् उद्दिश्य - ''देव ! पाटलीपुत्रतः आगतौ द्वौ दूतौ भवतः दर्शनं प्रतीक्षमाणौ स्तः'' इति उक्तवती ।



तदा अपि अशोकः किमपि न उक्तवान् । किन्तु यशः एव अनुक्षणम् उक्तवान् - ''महान् सन्तोषः । तौ दूतौ कां वार्ताम् आनीतवन्तौ स्तः इति अहं जानामि । युवराजेन अनुक्षणमेव पाटलीपुत्रं प्रति प्रस्थातव्यम् इति वार्ता आनीता अस्ति ताभ्याम् । तक्षशिलास्थं सुषेणं प्रति अपि तादृशी एव वार्ता प्रेषिता अस्ति'' इति ।

''युवराजेन इदानीम् एव किमर्थं प्रस्थातव्यम् ?'' इति पृष्टवती विदिशा ।

''मरणशय्यायां विद्यमानस्य पितुः समीपे पुत्रेण भवितव्यमेव खलु ? राजकीयदृष्ट्या अपि चिन्तनीयम् अस्माभिः । सुषेणः यथा राज्याधिकारं न स्वायत्तीकुर्यात् तथा कर्तुम् अपि अशोकेन अवश्यं राजधान्याम् अधुना भवितव्यम्'' इति उक्तवान् यशः ।

''ज्येष्ठपुत्रेण राज्यं प्राप्यते चेत् तत् न्यायसम्मतम् एव खलु ?'' इति पृष्टवती विदिशा सहजतया ।

''आम्, निश्चयेन ! परं यदि सुषेणः राजा स्यात् तर्हि प्रजाभ्यः द्रोहः कृतः भवेत् । प्रजाद्रोहः सर्वथा अनुचितः । ततः अपि अनुजस्य राज्यप्राप्तिः एव श्रेयस्करी खलु ?'' इति उक्तवान् यशः ।

यशस्य उत्तरं श्रुत्वा विदिशा किमपि वचनं न उक्तवती ।

तदा यशः अशोकं त्वरयन् - ''मित्र ! भवता अधुना एव पाटलीपुत्रं प्रति प्रस्थातव्यम् । किञ्चिदपि विलम्बः न करणीयः । अस्माकम् अर्धसैन्यम् अत्रैव भवतु । अवशिष्टम् अर्धसैन्यं भवता सह आगमिष्यति'' इति उक्तवान् सर्वं निर्णीतवान् इव ।

* * *

तदा अर्धरात्रसमयः आसीत् । एकस्मिन् विशाले प्रकोष्ठे कौषेयतल्पस्य उपरि उपविश्य ग्रीक्सुन्दर्याः नृत्यं पश्यन् सुषेणः अकस्मात् तत्र आगते नर्तक्यौ पश्यन् - ''भवत्यौ कथम् अत्र आगते ?'' इति आश्चर्येण पृष्टवान् ।

''भवता दत्तायाः राजमुद्रिकायाः साहाय्येन'' इति हसन्त्यौ उक्तवत्यौ ते नर्तक्यौ ।

''स्वीकृतं कार्यं पूरयितुम् अशक्ते अशोकेन बद्धे भवत्यौ पश्चात् तस्य पत्न्याः परिचारिकारूपेण कार्यं कुर्वत्यौ स्तः इति वार्ताम् अहं गूढचराणां द्वारा ज्ञातवान् अस्मि । तत् सत्यम् एव खलु ?'' इति पृष्टवान् सुषेणः ।

''प्रभो ! भवता उक्तं सर्वम् अक्षरशः सत्यम् एव । किन्तु आवयोः उद्देशः अन्यः एव आसीत् । भवता दत्तं कार्यं समाप्य एव आगन्तव्यम् इति निश्चित्य आवाम् अद्यपर्यन्तं तत्रैव स्थितवत्यौ'' इति उक्तवत्यौ नर्तक्यौ ।

''तत् कथम् ?'' इति पृच्छन् प्रश्नार्थकदृष्ट्या ते दृष्टवान् सुषेणः । तदा नर्तक्यौ ग्रीक्सुन्दरीं पश्यन्त्यौ मौनेन स्थितवत्यौ । सुषेणस्य संज्ञानुसारं ग्रीक्सुन्दरी ततः निर्गतवती ।

''इदानीं वदताम् । किं भवत्यौ तं नीचं मारितवत्यौ ?'' इति पृष्टवान् सुषेणः ।

''पारितोषिकस्य दानं यत् भवता प्रतिज्ञातम् आसीत् तत् भवान् न विस्मृतवान् खलु ? प्रथमं तस्मिन् विषये वदतु'' इति उक्तवत्यौ नर्तक्यौ ।

''तत् कथं वा विस्मरामि ? पूर्वं यावत्



प्रतिज्ञातम् आसीत् ततोऽपि द्विगुणितं धनं दापयिष्यामि मगधसिंहासनारोहणस्य समनन्तरम् एव । प्रथमं तं दासीपुत्रं भवत्यौ कथं मारितवत्यौ इति उच्यतां तावत्'' इति उक्तवान् सुषेणः अतिशयेन सन्तोषेण ।

''तस्य आहारे एकं विशिष्टम् औषधं योजयित्वा दत्तवत्यौ आवाम् । तेन सः अधुना पार्श्ववायुपीडितः सन् शय्याम् आश्रितवान् अस्ति'' इति उक्तवत्यौ नर्तक्यौ ।

''किमर्थं भवत्यौ किञ्चित् अधिकमेव विषम् आहारे योजयित्वा तं न मारितवत्यौ ? तेन मम शत्रोः समूलनाशः वा अभविष्यत्'' इति किञ्चित् असमाधानेन उक्तवान् सुषेणः ।

''यदि तथा कृतं स्यात् तर्हि पुनश्च

आवयोः बन्धनम् अभविष्यत् । इदानीं तु अस्मान् कोऽपि न शङ्कते । अस्माकं कार्यमपि सिद्धम् । सः उत्थाय शय्यायाम् एव उपवेष्टुम् अपि न शक्नोति । एवं स्थिते सिंहासनारोहणस्य का कथा ?'' इति उक्तवत्यौ नर्तक्यौ ।

''अहो ! बहु चतुरतया कार्यं साधितवत्यौ स्तः भवत्यौ'' इति वदन् आनन्दातिशयेन स्वकण्ठे विद्यमानं रत्नहारं ताभ्यां दत्तवान् सुषेणः ।

तावति काले द्वारे कश्चन शब्दः श्रुतः । तस्यां दिशि पश्यन् - ''आगम्यताम्'' इति उक्तवान् सुषेणः ।

सुषेणस्य प्रधानः अङ्गरक्षकः अन्तः आगत्य - ''प्रभो ! पाटलीपुत्रतः द्वौ दूतौ आगतौ स्तः । तौ अनुक्षणं भवन्तं द्रष्टुम् इच्छतः'' इति उक्तवान् ।

''तौ प्रवेशयतु'' इति अनुमतिं दत्तवान् सुषेणः । दूतौ अन्तः आगत्य सुषेणं नमस्कृत्य तस्मै पत्रद्वयं दत्तवन्तौ । प्रथमं पत्रं प्रधानमन्त्रिणा, सेनाधिपतिना च प्रेषितम् आसीत् । ''राज्ञः परिस्थितिः शोचनीया अस्ति । अतः अनुक्षणं प्रस्थाय राजधानीं प्रति आगन्तव्यम्'' इति तस्मिन् पत्रे लिखितम् आसीत् । द्वितीयं पत्रं तस्य मात्रा प्रेषितम् आसीत् । ''अशोकः भवतः आगमनात् पूर्वमेव आगत्य राज्यार्थं सङ्घर्षं कुर्यात् इति वार्ता मया श्रुता अस्ति । अतः भवता अनुक्षणं प्रस्थाय राजधानीं प्रति आगन्तव्यम् । विलम्बः सर्वथा न करणीयः'' इति तस्य पत्रस्य सारः आसीत् ।

पत्रद्वयस्य अपि सन्देशं लाघवेन भावयन् सुषेणः नर्तक्यौ उद्दिश्य - ''भवत्यौ अशोकस्य कीदृशीं स्थितिम् आनीतवत्यौ स्तः इति मम माता न जानाति । वराकी सा विना कारणं बहु भयम् अनुभवन्ती अस्ति'' इति उक्त्वा उच्चैः हसितवान् । पश्चात् अङ्गरक्षकम् उद्दिश्य - ''अस्माभिः त्वरा करणीया नास्ति । श्वः मां द्रष्टुं कश्चित् ग्रीक्वणिक् आगच्छन् अस्ति । तस्मै तक्षशिलायां वाणिज्यार्थम् अनुमतिं दास्यामि । तदर्थं सः मह्यम् एकम् अमूल्यं महान्तं रत्नहारं दास्यति उपायनरूपेण'' इति उक्तवान् ।

- *(अनुवर्तते )*






# महाधन्वा

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च ।

तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! लोके काऽपि व्यक्तिः सर्वेषु विषयेषु परिपूर्णा न इत्येषः विषयः देशाधिपतिना भवता ज्ञातः स्यात् एव । अतः एव राजानः न केवलं मन्त्रालोचनार्थम्, अपि तु राजनीतेः विषये, इतरेषु ऐहिकामुष्मिकविषयेषु चापि मार्गदर्शनं प्राप्तुं मन्त्रिणां नियुक्तिं कुर्वन्ति । परन्तु मन्त्रिणः स्वबुद्धिशक्तिं, स्वानुभवं, ग्रन्थात् प्राप्तं ज्ञानं च मेलयन्तः परस्पर-विरुद्धाभिप्रायान् यच्छन्ति कदाचित् । तादृशेषु अवसरेषु प्राप्ताः अभिप्रायाः तर्कसम्मताः वा न वा इति ज्ञातुं

# वेतालकथा



सूक्ष्मनिर्णयकौशलं सम्पादनीयं भवति राज्ञा । पूर्वं राज्ञा महाधन्वना आरम्भे कष्टम् अनन्तरं च सुखम् अनुभूतम् आसीत् । तस्य कारणं मन्त्री एकं कारणं वदति स्म । गुरुः अन्यत् एव कारणं वदति स्म । तादृशः कश्चित् भवतः आस्थानिकः सन् भवतः प्रकृतकष्टस्य कारणीभूतः स्यात् इति भावयामि अहम् । महाधन्वना कीदृशं कष्टम् अनुभूतम् इति ज्ञापयितुं तदीयां कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

ततः वेतालेन कथा आरब्धा -

पूर्वं निषधदेशं महाधन्वा नाम राजा पालयति स्म । सः कदाचित् निश्चितवान् यत् मन्नाम अन्वर्थकं कर्तुं मया एकं महाधनुः प्राप्तव्यम् एव इति । अतः सः मन्त्रिणम् आहूय - ''महाधन्वा इत्यस्य पदस्य अर्थः महाधनुषा युक्तः इति खलु ? एतस्मिन् लोके अन्येषु राजसु अविद्यमानं महत् धनुः मम समीपे भवेत् । अतः भवान् अनुक्षणं सर्वान् धनुर्निर्माणप्रवीणान् आह्वयतु । अर्जुनस्य गाण्डीवम् इव, रामस्य कोदण्डमिव मम धनुः अपि प्रसिद्धिं प्राप्नुयात्'' इति उक्तवान् ।

राजा एव यदि इच्छति तर्हि असाध्यं किम् ? मन्त्रिमहाशयस्य आह्वानानुगुणं धनुर्निर्माणकुशलाः सर्वे कलाविदः राजधानीम् आगतवन्तः । ते कठिनी, कर्णिका, शङ्खः, स्कन्धः, पल्लवं, हस्तकम् इत्येतैः षड्भिः भागैः सहितं कुशलकार्ययुक्तं धनुः शास्त्रानुसारं निर्मितवन्तः ।

तत् धनुः दृष्ट्वा - ''एतत् अर्जुनस्य गाण्डीववत् भारयुक्तम् अस्ति । एतादृशं धनुः अन्येषां महाराजानां समीपे नास्ति'' इति वदन्तः सर्वे श्लाघितवन्तः । एकस्मिन् शुभमुहूर्ते महाधन्वा तत् धनुः उन्नीय ज्याबन्धनं कृत्वा स्कन्धे धरन् सर्वेषाम् अभिनन्दनपात्रतां गतः ।

एकस्मिन् दिने महाधन्वा तत् धनुः धृत्वा मृगयार्थं वनं गतवान् । तस्मिन् समये क्वचित् वृक्षेण धनुषः घट्टनम् अभवत् । तेन धनुषि लघुविभेदः दृष्टः । राजा प्रासादं प्रतिगत्य कुशलकर्मकराणां द्वारा धनुः सम्यक् कारितवान् ।

अनन्तरदिने सः एतां घटनां स्वधनुर्विद्यागुरुम् उक्तवान् । सः गुरुः दीर्घशलाकया तस्य धनुषः औन्नत्यस्य मापनं कृतवान् । अनन्तरम् एकस्मिन् वृत्ते पद्यं लिखित्वा दीर्घशलाकायाः

समानाकारकान् लघुखण्डान् कृत्वा तान् शलाकाखण्डान् पद्मस्य दलानाम् उपरि स्थापयित्वा किञ्चित्कालं यावत् चिन्तामग्नः सन् उपविष्टवान् ।

अनन्तरं सः राजानम् उक्तवान् - ''एतत् सूक्ष्मरीत्या परिशीलयतु भवान् । एतेषु पद्मदलेषु वृत्तद्वयम् अस्ति । एतत् पद्मचक्रम् इति उच्यते । शलाकाखण्डाः, वृत्तद्वयेन युक्तानि दलानि च यदि दैर्घ्येण समत्वं प्राप्नुवन्ति तर्हि धनुः दोषमुक्तम् इति वदति पद्मचक्रस्य आधारभूतं धनुश्शास्त्रम् । एतस्मिन् शास्त्रे मम गुरुः अजेयः यावत् जानाति ततोऽपि अधिकम् अन्यः कोऽपि न जानाति । एते शलाकाखण्डाः पद्मदलदैर्घ्येण समानाः न सन्ति । एतेन ज्ञायते यत् धनुः औष्मिकनामकेन दोषेण पीडितम् अस्ति इति । अतः एतस्य धरणेन भवान् बहु कष्टम् अनुभविष्यति'' इति ।

गुरुणा उक्तं युक्तम् इति राजा यद्यपि ज्ञातवान्, तथापि धनुषि स्थितां प्रीतिं निग्रहीतुम् अशक्नुवन् सः तस्य धरणं न त्यक्तवान् एव । अनन्तरं केषुचित् एव दिनेषु एतस्य राज्यस्य उपरि शत्रुराजः आक्रमणं कृतवान् । तस्मिन् अवसरे दोषयुक्तम् एतत् धनुः धृत्वा महाधन्वा युद्धं कृत्वा पराजयं प्राप्तवान् ।

कारागृहे अवमानम् अनुभवितुम् अनिच्छन् राजा युद्धभूमिं परित्यज्य अश्वम् आरुह्य पार्श्वस्थम् अरण्यं प्रविष्टवान् ।

सः अरण्ये बहुदूरं गत्वा श्रान्तिम् अनुभवन् कस्यचित् वृक्षस्य अधः उपविश्य चिन्ताक्रान्तः जातः । तस्मिन् समये वनस्य जनाः तं दृष्ट्वा धावन्तः गत्वा स्वामिनम् एतं विषयम् उक्तवन्तः ।

वनजनानां नायकः राजसमीपम् आगत्य - ''महाराज ! भवतः राज्यं






शत्रुजनैः आक्रान्तम् इति श्रुतम् । भवान् किञ्चित्कालं यावत् समाधानेन भवतु । यदा कोलाहलः न्यूनः भविष्यति तदा अस्माकं जनानां साहाय्यं स्वीकृत्य आक्रमणं कृत्वा पुनः राज्यं प्राप्तुं शक्यते'' इति उक्तवान् ।

तस्मिन् प्रदेशे विद्यमानाः सर्वे वनजनाः धनुः गृहीत्वा एव अटन्ति स्म । महिलाः अपि धनुः गृहीत्वा एव अटन्ति इति एषः विषयः तु राज्ञः बहु सन्तोषाय जातः । सः वनजनानां नायकम् उद्दिश्य - ''भवतां धनुः बहु लघु । मम धनुः तु महाकारकम् । तस्य उन्नयनम् अपि क्लेशकरम् । किमर्थम् एवम् ? '' इति पृष्टवान् ।

तदा सः वनवासिजननायकः विनयेन - ''महाराज ! भवान् सर्वं जानाति एव । सर्वस्य अपि शास्त्रसम्मतं यत्किञ्चित् कारणं भवति एव । अस्माकं जीवनपद्धतिः यदा परिशील्यते तदा ज्ञायते यत् अस्मदीयं धनुः लघु भवेत् इति । कस्यचित् रथस्य उपरि, अश्वस्य उपरि, गजस्य उपरि वा उपविश्य युद्धं कर्तुम् आनुकूल्यं कल्पयन्ति भवतां धनूंषि । तादृशानि अस्माकं प्रयोजनाय न भवन्ति । तादृशानि धनूंषि वयम् आत्मरक्षणार्थं युद्धेषु क्वचित् उपयुञ्महे । अस्माकं धनूंषि यद्यपि लघूनि तथापि तानि शास्त्रोक्तरीत्या एव निर्मितानि सन्ति । तेषु कोऽपि दोषः दृश्यते चेत् तत् वयं क्षिपामः'' इति उक्तवान् ।

'धनुषि औष्मिकनामकः दोषः कश्चित् अस्ति' इति गुरुणा उक्तं वचनं तदा महाधन्वा स्मृतवान् । तस्य दोषस्य प्रभावतः राजा मुक्तः न आसीत् । अतः सप्ताहाभ्यन्तरे एव पुनरपि शत्रुराजः वन-जनानाम् उपरि अपि आक्रमणं कृतवान् ।

वनजनानां पराक्रमे युद्धकौशले च विश्वासविहीनः महाधन्वा स्वस्य दुरदृष्टं निन्दन् ततः धावन् पार्श्वग्रामस्य कस्यचित् पुरातनदेवालयस्य अन्तः प्रविष्टवान् ।

अल्पे एव समये महाधन्वा बुभुक्षया पीडितः जातः । तां पीडां सोढुम् अशक्नुवन् सः देवालयस्य मण्डपस्य उपरिभागे डयमानान् पारावतान् ग्रहीतुं जालरूपेण स्वस्य उत्तरीयं प्रसारितवान् । परन्तु तदा विचित्रम् एकं प्रवृत्तम् । पूर्वं निषधराजस्य नलस्य कथायां यथा प्रवृत्तं तथैव अत्र अपि प्रवृत्तम् । तन्नाम पारावताः तस्य उत्तरीयं गृहीत्वा एव उड्डीय गतवन्तः ।

तत् दृष्ट्वा महाधन्वा नितरां कुपितः जातः । महता कोपेन 'एतस्य धनुषः कारणात् एव कष्टानि आगतानि' इति चिन्तयन् सः आत्मना किं क्रियमाणम् अस्ति इति अजानन् एव पुरतः स्थितं शिलाखण्डं लक्ष्यीकृत्य बलात् एकं बाणं प्रयुक्तवान् । न केवलं तावत्, तत् धनुः अपि खण्डयित्वा क्षिप्तवान् ।



अनन्तरं महाधन्वा शिलाखण्डस्य समीपं गतवान् । तत्र सः शतधा भग्नं शिलाखण्डं दृष्टवान् । शिलाखण्डस्य अधोभागे काचित् गुहा तेन लक्षिता । गुहायाः अन्तः पेटिकासु अमूल्यानि रत्नानि, वज्राणि, सुवर्ण-नाणकानि च तेन दृष्टानि । राजा तानि महता आश्चर्येण आनन्देन च पश्यन् स्थितवान् ।

तावता वननायकः राज्ञः मार्गम् एव अनुसृत्य आगत्य राजानं दृष्ट्वा नमस्कृत्य - ''महाराज ! भवतः शत्रुराजः अस्माकं धैर्यं, साहसं, युद्धकौशलं च अत्यल्पं भावितवान् आसीत् । वने शिलामयेषु वृक्षबहुलेषु च स्थलेषु अश्वसैन्यं प्रयोजनाय न भवति । नागरिकाः सैनिकाः अपि एतादृशेषु स्थलेषु सम्यक् युद्धं कर्तुं न अर्हन्ति । एतस्मिन् वने एव जननं प्राप्य अत्रैव वर्धितः अस्मदीयः एकैकः अपि भटः दशसैनिकसमानः अस्ति । अतः एव सः राजा अस्माकं बन्दी जातः'' इति उक्तवान् ।

महाधन्वा तं वननायकं बहुधा प्रशंसितवान् । ततः गुहायां विद्यमानानि सर्वाणि अमूल्यवस्तूनि वनजनानां साहाय्येन बहिः आनाय्य राजधानीं प्रति नीतवान् ।

यावत् राजा प्रासादस्य समीपं गतवान् तावता तत्र मन्त्री राजगुरुश्च उपस्थितौ आस्ताम् । महाधन्वना आनीतं धनं दृष्ट्वा मन्त्री आश्चर्यम् अनुभवन् राज्ञः मुखात् एव प्रवृत्तं सर्वं ज्ञातवान् । ततः सः राजानम् उक्तवान्- ''प्रभो ! भवतः पूर्वजेषु धनञ्जयः नाम राजा बहून् यज्ञान् कृत्वा दरिद्राणां कृते बहुधा दानं कृत्वा अवशिष्टां सम्पत्तिं तत्रैव गुहायां रहस्यरूपेण संस्थाप्य तस्य उपरि कञ्चित् शिलाखण्डम् आरोप्य वानप्रस्थाश्रमं श्रितवान् इति काचित् किंवदन्ती बहोः कालतः श्रूयते । तेन रहसि स्थापितां सम्पत्तिं प्राप्तुं बहुजनैः बहुधा प्रयत्नाः कृताः । तथापि केनापि तत् स्थलं न ज्ञातम् एव आसीत् । गच्छता कालेन सः विषयः एव जनानां स्मृतिपथात् अपगतः जातः । एषः विषयः अस्माकं प्रपितामह-

पितामह-तातद्वारा अस्माभिः ज्ञातः अस्ति । सः निधिः एव एषः इति मम विश्वासः । भवान् निश्चयेन महाधन्वा एव । धनुषः कारणात् एव निधिः प्राप्तः'' इति ।

एतत् श्रुत्वा हसन् राजगुरुः - ''महाराजः यदा औष्मिकदोषेण पीडितं तत् धनुः क्षिप्तवान् तदनन्तरम् एव तत्सम्बद्धः दोषः निर्गतः । सम्पत्तिः राज्यं च तेन प्राप्तम्'' इति उक्तवान् ।

वेतालः एतां कथाम् उक्त्वा - ''राजन् ! महाधन्वनः मन्त्री गुरुश्चापि बुद्धिमन्तौ इत्यत्र नास्ति संशयः । मन्त्रिणः अभिप्रायानुसारं महाधन्वनः धनुषः कारणात् एव तस्य पूर्वजैः रक्षिता रहस्यस्थलस्था सम्पत्तिः दृष्टिगोचरतां गता । तथा च गुरोः अभिप्रायानुसारम् औष्मिकदोषयुक्तस्य धनुषः त्यागानन्तरम् एव गुहा दृष्टा । तयोः मन्त्रि-गुर्वोः अभिप्राययोः कतरः अभिप्रायः युक्तः इति विषयः संशयास्पदं जातः अस्ति । एतस्य सन्देहस्य परिहारं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति उक्तवान् ।

तदा त्रिविक्रमः - ''देशकालपरिस्थिति-प्रभावः एव मनुष्यस्य उच्चनीचस्तरस्य कारणम् अस्ति । एतं विषयं लौकिक-विषयादिषु ये सूक्ष्मपरिशीलनदृष्टियुक्ताः भवन्ति ते केवलं ज्ञातुं शक्नुवन्ति । अत्र मन्त्री लौकिकः, गुरुः नीतिज्ञः च अस्ति । स्वगुरुणा अजेयेन उपदिष्टानि शास्त्राणि देशकालातीतानि त्रैकालिकानि च इति विश्वासं प्राप्तवान् अस्ति गुरुः । महाधन्वा यदा बाणेन महान्तं शिलाखण्डं ताडितवान् तदा एव गुहा दृष्टिगोचरतां गता । अनन्तरं सः तत् धनुः अपि क्षिप्तवान् । एतेन ज्ञायते यत् गुरुणा औष्मिकदोषयुक्तत्वेन यत् धनुः निर्दिष्टम् आसीत् तस्य कारणात् एव सम्पत्तिः न प्राप्ता इति । एतं सूक्ष्मविचारं मन्त्री ज्ञातवान् । परन्तु शास्त्रज्ञः गुरुः एतत् ज्ञातुं सर्वथा न शक्तः । अतः निश्चयेन वयं वक्तुं शक्नुमः यत् मन्त्रिणः अभिप्रायः एव वस्तुतः तर्कसम्मतः अस्ति इति'' इति उक्तवान् ।

एवं वदता राज्ञा मौनस्य भङ्गः कृतः आसीत् इत्यतः वेतालः शवेन सह अदृश्यः भूत्वा पुनः वृक्षारोहणं कृतवान् ।





# अनुरूपं भ्रातृत्वम्

कस्मिंश्चित् ग्रामे परमेशः नाम कृषकः आसीत् । तस्य द्वौ पुत्रौ आस्ताम् । उभौ अपि गुणिनौ । ज्येष्ठस्य नाम रामः इति, कनिष्ठस्य नाम लक्ष्मणः इति च आसीत् ।

वस्तुतः रामलक्ष्मणयोः इव एव तयोः परस्परप्रीतिः विशेषतः आसीत् । मातापित्रोः विषये अपि विशेषादरः आसीत् तयोः । यदा उभौ अपि प्राप्तवयस्कौ जातौ तदा उभयोः अपि विवाहः अभवत् । तयोः पत्न्यौ अपि गृहम् आगते ।

विवाहानन्तरम् अल्पे एव काले तयोः मातापितरौ दिवङ्गतौ । मातापित्रोः मरणानन्तरम् अपि तौ मिलित्वा वसन्तौ क्षेत्रे अपि मिलित्वा एव कार्यं कुर्वन्तौ आस्ताम् । अग्रजः यदा भोजनार्थं गच्छति स्म तदा अनुजः क्षेत्रे कार्यं करोति स्म । अनुजः यदा भोजनार्थं गच्छति स्म तदा अग्रजः स्वस्य अनुजस्य चापि क्षेत्रं श्रद्धया रक्षति स्म ।

एवम् एव कालः गतः । रामस्य अपत्यानि न अभवन् । लक्ष्मणस्य तु पञ्च अपत्यानि अभवन् । एतेन कारणेन गृहकार्यविषये गृहिण्योः मध्ये लघुविषयेषु अपि कलहः भवति स्म । एतादृशस्य कलहस्य निवारणार्थं 'पृथक्वासकरणम्' एव अनन्यः परिहारः आसीत् । अतः भ्रातरौ रामलक्ष्मणौ सम्पत्तिं विभज्य पृथक् निवासम् आरब्धवन्तौ । किन्तु विभागकरणेन अपि तयोः मध्ये प्रीतेः अभिमानस्य च न्यूनता किञ्चिदपि न आसीत् । क्षेत्रे तौ परस्परं सहयोगेन एव कार्यं कुरुतः स्म ।

एकस्मिन् वर्षे क्षेत्रे अधिकं धान्यवर्धनम् अभवत् । उभौ अपि भ्रातरौ प्रवृद्धं धान्यं कर्तयित्वा क्षेत्रे एव राशीकृतवन्तौ । अन्ते गृहं प्रति धान्यनयनमात्रम् अवशिष्टम् आसीत् ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

तस्यां रात्रौ रामलक्ष्मणौ स्वस्वक्षेत्रं प्रति रक्षणार्थं गतवन्तौ । भोजनसमये रामः अनुजम् उक्तवान् - "अनुज ! अहं भोजनार्थं गच्छन् अस्मि । मम आगमनपर्यन्तं मम धान्यराशेः रक्षणं भवान् करोतु । मम आगमनान्तरं भवान् भोजनार्थं गच्छतु" इति उक्तवान् ।

लक्ष्मणः "अस्तु" इति अङ्गीकृतवान् । अग्रजस्य गमनानन्तरं लक्ष्मणस्य मनसि एवं विचाराः आगताः - 'मम तु त्रयः पुत्राः द्वे पुत्र्यौ च स्तः । वर्षद्वयस्य अनन्तरं मम ज्येष्ठपुत्रः कार्ये मम साहाय्यं कर्तुं शक्ष्यति । तदा मम एतावत् कार्यं न भविष्यति । किन्तु अग्रजस्य तु अपत्यानि न सन्ति । तस्य वयः अपि अधिकं भवत् अस्ति । वार्धक्ये सः सुखेन जीवेत्, विश्रान्तिसुखं च अनुभवेत् । परम् अहं साहाय्यं करोमि इति वदामि चेत् सः न अङ्गीकरोति । सः अङ्गीकरोति चेदपि मम पत्नी सर्वथा न अङ्गीकरोति । अतः मया किमपि करणीयम्' इति ।

एवं चिन्तयित्वा लक्ष्मणः एकां गोणीं स्वीकृत्य दशगोणीपरिमितं धान्यम् अग्रजस्य राशौ योजयित्वा किमपि अकृतम् इव व्यवहरन् मञ्चस्य उपरि उपविष्टवान् ।

तदा रामः भोजनं समाप्य प्रत्यागतवान्, लक्ष्मणं भोजनार्थं प्रेषितवान् च । यदा लक्ष्मणः भोजनार्थं गतः तदा रामः एवं चिन्तितवान् - 'अस्मिन् वर्षे अधिकं धान्यवर्धनं जातम् अस्ति । यावत् वा धान्यं वर्धताम् नाम, तत् लक्ष्मणाय अपर्याप्तम् एव भविष्यति । यतः तस्य कुटुम्बं महत् अस्ति । पुत्राणाम् अध्ययनार्थं वेषभूषणादि-निमित्तं च तेन महान् व्ययः करणीयः भवति एव । मम तु तावान् व्ययः नास्ति । गृहे आवां तु उभौ एव - अहं मम पत्नी च । लक्ष्मणस्य साहाय्यं कर्तुं मम अयं कश्चित् अवसरः । किन्तु अहं ददामि चेत् लक्ष्मणः न स्वीकरिष्यति । कदाचित् सः अङ्गीकुर्यात् । किन्तु मम पत्नी तत् न अनुमन्यते । अतः अन्यः एव उपायः आश्रयणीयः' इति । एवं चिन्तयित्वा रामः इतस्ततः पश्यन् रहसि लक्ष्मणेन उपयुक्तां गोणीम् एव स्वीकृत्य स्वधान्यराशितः दशगोणीपरिमितं धान्यं नीत्वा अनुजस्य धान्यराशौ योजितवान् । अनन्तरं यथापूर्वं स्वस्थाने उपविष्टवान् च ।



# पश्चिमबङ्गालस्य तीरम्

रचना - मीरानायर् ❁ चित्राणि - गौतमसेनः




देवालयार्थं प्रसिद्धात् ओरिस्साराज्यात् उत्तरे प्रयाणेन महापुरुषाणां, कवीनां च उत्पत्तिस्थानम् इति प्रसिद्धस्य पश्चिमबङ्गालस्य समुद्रतीरं वयं प्राप्नुमः ।

ओरिस्सायाः उत्तरदिशि विद्यमानस्य पश्चिमबङ्गालस्य मिड्नापुरमण्डलस्य समुद्रतीरस्य 'कान्तितीरम्' इत्यपि अपरं नामधेयम् अस्ति । मिड्नापुरं पश्चिमबङ्गाले एव द्वितीयं विशालं मण्डलम् अस्ति । होग्लानामकैः तृणैः निर्मितानां कटानां निमित्तम् अपि मिड्नापुरं प्रसिद्धम् अस्ति । व्रीहिः, कदली, आम्रः, पनसः, नारिकेलम् इत्यादयः अत्र महता प्रमाणेन वर्ध्यन्ते इत्यतः अपि एतत् नगरं प्रसिद्धिं गतवत् अस्ति ।

कान्तितीरेषु दीघूनामकं समुद्रतीरं प्रवासिकेन्द्रत्वेन परिगण्यते । एकत्र उन्नतेन सैकतमयप्रदेशेन युक्तं अष्ट कि.मी. दीर्घम् इदं 'दीघू'तीरम् अस्माकं देशे विद्यमानेषु सुन्दरेषु समुद्रतीरेषु अन्यतमम् अस्ति । आंग्लाः एतत् तीरं 'बीर्कूल्' इति निर्दिशन्ति स्म । बङ्गालस्य प्रथमः राज्यपालः वारन् हेस्टिंग्स् इदं 'ब्रिटन् आफ् दि ईष्ट्' इति वर्णितवान् अस्ति ।

कान्तितीरस्य अन्ते 'हूग्लि' इत्याख्या गङ्गानदी समुद्रेण मिलति । विशालायां गभीरायां च अस्यां नद्यां बहुप्राचीनकालतः एव नौकाः सञ्चरन्ति स्म ।

दीघूतीरम्





सुतानुतिस्थं बैठक्खाना

इतः किञ्चित् उत्तरे भागे वर्तमानं ताम्रलिप्तिनामकं नगरं (यच्च इदानीं 'बाम्लुक्' इति नाम्ना निर्दिश्यते) सामान्यतः क्रि.पू.पञ्चमे षष्ठे च शतके एव प्रसिद्धं नौकास्थानम् आसीत् इति ज्ञायते । बुद्धगयातः श्रीलङ्कां प्रति बोधिवृक्षं नीतवत्याः महानौकायाः प्रेषणार्थं चकवर्ती अशोकः स्वयम् एतत् समुद्रतीरम् आगतवान् आसीत् इति श्रूयते । गयायां तस्य बोधिवृक्षस्य एव अधः उपविष्टस्य ध्यानमग्नस्य गौतमबुद्धस्य ज्ञानोदयः जातः आसीत् ।

हूग्लिनदीतीरे कदाचित् सुतानुतिनामकः ग्रामः आसीत्, यश्च इदानीम् उध्वस्तः अस्ति । नद्या सह आगच्छन् सैकतराशिः नौकायाः सञ्चारे विघ्नं जनयति स्म । अतः वणिजः सुतानुत्याम् एव वाणिज्यम् आरब्धवन्तः आसन् । वाणिज्यार्थं ते विशालस्य अश्वत्थवृक्षस्य अधः उपविशन्ति स्म । तत् स्थानं 'बैठक्खाना' इति ते निर्दिशन्ति स्म । १६९० तमे आगस्ट्मासे एकस्मिन् भानुवासरे ईष्ट् इण्डिया संस्थायाः प्रतिनिधिः जाब् चार्नाक्नामकः तत्र आगतः । तस्य प्रदेशस्य सौन्दर्येण आकृष्टः सः तत्र एव संस्थायाः कार्यालयं निर्मातुम् इष्टवान् । १८२० तमे वर्षे सः तं वृक्षं कर्तितवान् । जाब् चार्नाकः औरङ्गजेबवंशजानाम् अनुमतिं प्राप्य सुतानुतिः, गोविन्दपुरं, कालिकट् इति एतान् त्रीन् ग्रामान् योजयित्वा इदानीन्तनं कलकत्तानगरं निर्मितवान् अस्ति ।

चार्नाकः एव कलकत्तानगरस्य प्रथमः राज्यपालः अभवत् । पत्युः शवेन सह चितारोहणं कुर्वतीं काञ्चित् भारतीयमहिलां रक्षित्वा सः ताम् एव ऊढवान् । सः कलकत्तानगरे एव उषित्वा तत्रैव मृतः । तस्य शवस्थानं सैण्ट्जान्स् क्रैस्तदेवालये अधुना अपि द्रष्टुं शक्यम् ।

'कालिकट् इति नाम आंग्लानां उच्चारणेन 'कलकत्ता' इति परिवर्तितम् अभवत्' इति वदन्ति केचित् । सुधानिर्माणस्थानं बङ्गालीभाषया 'कल्कट्' इति निर्दिश्यते । 'अस्मिन् प्रदेशे सुधानिर्माणस्थानानि अधिकतया आसन् इति कारणेन एव अस्य प्रदेशस्य कलकत्ता इति नाम आगतम्' इति अपरे केचित् वदन्ति ।

अस्माकं देशस्य ११ प्रमुखेषु नौकास्थानेषु कलकत्ता एकमेव नद्याः तीरे अस्ति । एतत् समुद्रतः २३२ कि.मी. दूरे अस्ति । पङ्कमयी मृत्तिका अत्र तदा तदा नौकाप्रयाणे विघ्नम्



सेण्ट्जान्स्मन्दिरस्थं जाब्चार्नाक्स्मारकम्

उत्पादयति । अतः तदा तदा तस्याः निष्कासनं करणीयं भवति अत्र। प्रतिदिनम् अत्र जलस्य गभीरता परिवर्तते । अतः निरन्तरम् अत्र गभीरतायाः परीक्षा करणीया भवति । तथैव गभीरतापरिवर्तनस्य अनुगुणं नौकासञ्चारार्थं योग्या व्यवस्था अपि करणीया भवति । एतस्य क्लेशस्य कारणेन एव १९७७ तमे वर्षे हल्डियानौकास्थानं निर्मितम् । विश्वे विद्यमानेषु महत्सु 'लाक् एन्ट्रेन्स्' युक्तेषु नौकास्थानेषु हाल्डिया अपि अन्यतमम् अस्ति ।



रवीन्द्रसेतुः

१९४३ तमवर्षपर्यन्तं हौरासेतुः एव कलकत्तानगर-हौरानगरयोः सम्बन्धं कल्पयति स्म । किन्तु लघौ अपि हौराजनपदे अधिकः जनसञ्चारः वाहनसञ्चारश्च आसीत् इति कारणेन विशालः रवीन्द्रसेतुः अनन्तरकाले निर्मितः । एषः अस्माकं देशे विद्यमानः अतिमहान् काण्टिलीवर्सेतुः अस्ति । एतस्य वैशाल्यं ४७५ मीटर् परिमितम् अस्ति । अष्ट वाहनमार्गाः उभौ पादचारिणां मार्गौ चापि सन्ति अत्र । विश्वे सम्मर्दयुक्तासु महासेतुषु एषः अपि अन्यतमः अस्ति ।

हौरास्थं शिवपूर् बटानिकल् गार्डन्स् १७८६तमे वर्षे निर्मितम् । २४.४ मीटर् उन्नतः ३६६ मीटर् विशालः च अतिमहान् प्रसिद्धश्च कश्चन वटवृक्षः अत्रैव अस्ति । वटस्य प्रधानः प्रकाण्डः यद्यपि नष्टः अस्ति, तथापि तस्य सहस्रशाः जटाः अधुना अपि दृढाः सन्ति । तथैव नूतनाः जटाः उत्पद्यमानाः सन्ति अपि ।

एतस्मिन् उद्याने द्विसहस्राधिकानि विविधानि अपूर्वसस्यानि सन्ति । अमेजान्प्रदेशीयः 'जैण्ट् वाटर् लिल्लीसुवृक्षः', मेलुकासुप्रदेशीयः 'नट्मेग्वृक्षः', पश्चिमाफ्रिकादेशीयः 'का रिपा एलाटा वृक्षः' इत्यादयः अतिविरलाः वृक्षाः अपि अत्र सन्ति । 'का रिपा एलाटा वृक्षः' तु चत्वरिंशद्वर्षेषु एकवारं पुष्प्यति इति श्रूयते ।



सस्योद्यानस्थः सुविशालः वटवृक्षः

एतस्मिन् उद्याने केन्द्रीय-राष्ट्रिय-सस्यशास्त्रग्रन्थागारम् अस्ति । तत्र अमूल्यानि वृक्षशास्त्रीयाणि, सस्य-शास्त्रीयाणि, कीटशास्त्रीयाणि, भूतत्त्वसम्बद्धानि, कृषितन्त्र-सम्बद्धानि, पत्रिकापुस्तकादीनि, अप्रकाशितग्रन्थानां मूलप्रतिकृतयः च सन्ति। एतेषु सार्धद्विशत-लक्षाधिकसस्यानां विषये विवरणम् अस्तीति ज्ञायते ।

हौरातः उत्तरे विद्यमाने बेलूरुनगरे

श्रीरामकृष्णाश्रमस्य अन्ताराष्ट्रियप्रचारकार्यालयः अस्ति । १९ शतके सर्वधर्मसमन्वयभावं प्रसारितवतः श्रीरामकृष्णपरमहंसस्य प्रधानः शिष्यः स्वामी विवेकानन्दः १८९९ तमे वर्षे एतं कार्यालयं स्थापितवान् ।

श्रीरामकृष्णपरमहंसस्य सर्वधर्मसमभावस्य नीतेः अनुगुणम् एव बेलूरुमठे देवालयः निर्मितः अस्ति । इस्लां-हिन्दु-क्रैस्त-पूजास्थानानां रचनाशैल्याः सङ्गमम् अत्र द्रष्टुं प्रभवामः वयम् ।

हूग्लिनद्याः अपरस्मिन् तीरे दक्षिणेश्वरस्य कालीमन्दिरम् अस्ति । तस्मिन् देवालये एव श्रीरामकृष्णपरमहंसस्य सर्वधर्मसमन्वयतादर्शनम् अभवत् इति जनाः मन्यन्ते । इदं मन्दिरं १८४७ तमे वर्षे निर्मितम् ।



दक्षिणेश्वरस्थं कालिकामन्दिरम्

दक्षिणेश्वरस्य दक्षिणे भागे कुमर्तुलनामकं कुम्भकाराणां वासस्थानम् अस्ति । अत्रत्याः कुम्भकाराः मृत्तिकया दुर्गदिव्याः पाञ्चालिकानिर्माणे निपुणाः सन्ति । दुर्गापूजायाः अवसरे एते देव्याः विग्रहान् चित्ताकर्षकैः वर्णैः अलङ्कुर्वन्ति । दूर्गा-पूजायाः अनन्तरं देव्याः विग्रहः जले विसृज्यते इति कारणेन एतान् विग्रहान् ते अग्निना न उत्तापयन्ति ।

कलकत्ताप्रदेशे सप्टेम्बर्-अक्टोबर्-मासयोः दुर्गापूजा वैभवेन आचर्यते । हिमालयस्य पुत्री दुर्गा (पार्वती) निश्चितवती यत् परमेश्वरः एव पतिरूपेण प्राप्तव्यः इति । किन्तु तस्याः माता मेना तत् न इच्छति स्म । तथापि परमेश्वरः एव पतिरूपेण प्राप्तव्यः इति सङ्कल्प्य पार्वती कठोरं तपः आरब्धवती । तस्याः तपसा सन्तुष्टः परमेश्वरः तां परिणीय कैलासं प्रति नीतवान् । प्रीत्या पालिता पुत्री दूरं गता इति तस्याः मातापितरौ दुःखितौ जातौ ।

तयोः दुःखनिवारणार्थं दुर्गा वर्षे एकवारं मातृगृहम् आगच्छति स्म । 'दुर्गायाः मातृगृहागमनं निमित्तीकृत्य सन्तोषपूर्वकम् आचर्यमाणः उत्सवः एव दुर्गापूजा' इति बहूनां बङ्गालीयजनानां विश्वासः ।



दुर्गामातुः मृन्मयी मूर्तिः



# जले पतितः बिन्दुः

सीतापुरराज्ये योगीन्द्रः नाम कविः आसीत् । सः चमत्कारवचने अद्वितीयः आसीत् । किन्तु राजा श्रीपतिः विनोदप्रियः न आसीत् । यदि योगीन्द्रः किमपि सम्भाषते तर्हि 'मम उपहासमेव योगीन्द्रः कुर्वन् अस्ति' इति भावयति स्म श्रीपतिः । श्रीपतिः तथा चिन्तयति इति योगीन्द्रः अपि जानाति स्म । तथापि सः स्वस्य विनोदप्रवृत्तिं न त्यक्तवान् । अतः दिने दिने योगीन्द्रस्य विषये श्रीपतेः द्वेषभावना प्रवृद्धा । सः योगीन्द्राय क्लेशं दातुं विभिन्नान् उपायान् चिन्तयति स्म ।

यदा सभायां कवितावाचनं क्रियते, यदा च अन्यराज्यात् पण्डिताः आगच्छन्ति तदा आस्थानकवये सुवर्णनाणकस्य दानस्य पद्धतिः आसीत् सीतापुरे । एतां पद्धतिं परित्यज्य श्रीपतिः योगीन्द्राय पुरस्कारस्य दानम् आरब्धवान् ।

एवं कुर्वन् श्रीपतिः वदति स्म - ''सामान्यजनानां कृते एतत् सर्वं दद्मः चेत् तस्य मूल्यं अजानन्तः ते तस्य विक्रयणं कुर्वन्ति । परन्तु योगीन्द्रः विशिष्टस्य एतस्य संरक्षणं कृत्वा सर्वेभ्यः दर्शयति, इत्यतः एव अहं तस्मै एतादृशम् उपहारं दापयन् अस्मि'' इति । एवं वदन् श्रीपतिः योगीन्द्रेण पुरस्कारवस्तूनि विक्रेतुं यथा न शक्येत तथा करोति स्म ।

एवं धनस्य अप्राप्तितः, अन्यविधस्य आयस्य अभावतः च योगीन्द्रः धनाभावपीडाग्रस्तः जातः । एतादृशे अवसरे ज्योतिषपुरराज्यात् विदुरः नाम पण्डितः आगत्य श्रीपतिं तोषितवान् । श्रीपतिः विदुरम् उद्दिश्य - ''भवान् यत् इच्छति तत् प्रार्थयतु'' इति उक्तवान् ।

''देव ! भवतः आस्थानकविः योगीन्द्रः अप्रतिमप्रतिभाशाली अस्ति । तस्य वाणी



अस्माकं सभायामपि प्रतिध्वनिता भवतु इति अस्माकं महाराजस्य गजपतेः इच्छा अस्ति । अतः योगीन्द्रं मया सह प्रेषयतु इति निवेदयामि'' इति उक्तवान् विदुरः ।

तदा श्रीपतिः आश्चर्यं प्रकटयन् उक्तवान् - ''सर्वे भूमिं नवरत्नानि धनकनवाहनादीनि च इच्छन्ति । किन्तु भवतः अपेक्षा तु विचित्रा अस्ति खलु ? अस्तु, योगीद्रं भवता सह प्रेषयितुं मम विरोधः कोऽपि नास्ति । एतत् अतिरिच्य अपि किमपि प्रार्थयतु भवान्'' इति ।

विदुरः विनयेन श्रीपतिं नमस्कुर्वन् उक्तवान् - ''अस्माकं प्रभोः अनुग्रहेण मम कोऽपि क्लेशः नास्ति । अन्यराज्यात् धनस्य अपेक्षाकरणं अस्माकं राज्यस्य गौरवाय न भवति । अतः धनस्वीकारविषये अनुरोधं मा करोतु कृपया'' इति ।

'योगीन्द्रस्य अधुना धनस्य आवश्यकता अस्ति । विदुरेण सह गजपतेः आस्थानं प्रति एषः यदि गमिष्यति तर्हि तत्र निश्चयेन धनं प्रार्थयेत् एषः । तत् अस्माकं राज्यस्य गौरवाय नः भवति' इति विचिन्त्य श्रीपतिः विदुरम् उद्दिश्य - ''गजपतिः योगीन्द्रात् किम् अपेक्षते ?'' इति पृष्टवान् ।

''स्वामिन् ! अस्माकं राज्ये विशेषतया कलाराधनं प्रचलत् अस्ति । प्रजाः सर्वाः सुखेन सन्ति । जनाः सर्वे नीरोगिणः सन्ति । एतत् सर्वं दृष्ट्वा अस्माकं महाराजस्य श्लाघनं कृत्वा, काव्यं विलिख्य गायतु योगीन्द्रः इति गजपतेः अपेक्षा'' इति उक्तवान् विदुरः ।

योगीन्द्रः स्वाभिमानी मनुष्यः आसीत् । धनार्थं सः कमपि न श्लाघते स्म, न याचते स्म च । एषः विषयः श्रीपतिना ज्ञातः एव आसीत् । अतः - ''योगीन्द्रस्य नयने मम विरोधः कोऽपि नास्ति । सर्वं तस्य इच्छा'' इति उक्तवान् सः ।

धनस्य अयाचकः, अन्यश्लाघने अनासक्तः योगीन्द्रः गजपतेः आस्थानं प्रति न गच्छेत् इति चिन्तनम् आसीत् श्रीपतेः । किन्तु योगीन्द्रः श्रीपतौ आश्चर्यं जनयन् ज्योतिषपुरं प्रति गमनम् अङ्गीकृतवान् । तदा श्रीपतिः विदुरम् उक्तवान् - ''पण्डितोत्तम ! भवान् स्वस्य राज्यस्य गौरवं यथा रक्षितवान् तथा एषः अपि स्वस्य राज्यस्य गौरवं रक्षिष्यति । अतः भवान् गजपतिः वा अस्मिन् विषये आक्षेपं न कुर्यात्'' इति ।

'श्रीपतिना एतानि वचनानि मां जागरयितुम् एव उक्तानि' इति ज्ञातवान्

योगीन्द्रः । पश्चात् विदुरेण सह योगीन्द्रः गजपतेः राज्यं गतवान् । योगीन्द्रः तत्र सर्वं दृष्ट्वा सन्तुष्टः । गजपतेः प्रजापालनक्रमः बहु समीचीनः आसीत् । अतः सः सभायां गजपतेः श्लाघनं कृत्वा काव्यानि विलिख्य पठितवान् । तेन गजपतिः नितरां सन्तुष्टः सन् - ''योगीन्द्र ! भवान् किम् अपेक्षते ? वदतु'' इति उक्तवान् ।

''प्रभो ! पण्डितानाम् इच्छापूरणं भवतः धर्मः एव । परन्तु अपेक्षाकरणं कवेः न शोभते'' इति उक्तवान् योगीन्द्रः । गजपतिः योगीन्द्राय पीताम्बरवस्त्रैः सह कानिचन उत्तममौक्तिकानि अपि दत्त्वा उक्तवान् - ''यथाशक्ति अहं पुरस्कृतवान् अस्मि । भवतः विद्वत्तायाः अनुगुणं दातुं मम शक्तिः नास्ति । अहं क्षन्तव्यः'' इति ।

योगीन्द्रः तत् स्वीकृत्य सन्तोषेण स्वराज्यं प्रत्यागतवान् । सीतापुरं प्रति आगमनानन्तरं योगीन्द्रः श्रीपतिना मिलित्वा गजपतिना दत्तानि उपायनानि दर्शितवान् । उपायनस्य पादभागस्य विक्रयणेन एव योगीन्द्रस्य सन्ततिः अपि सुखेन जीवितुं शक्ष्यति इति ज्ञातवान् श्रीपतिः । अतः सः असूयाम् अनुभवन् - ''विदुरः उक्तवान् यत् यदि अहं धनं स्वीकरोमि तर्हि मम राज्यस्य अपमाननं भवति इति । स्वराज्यस्य विषये तस्य कियत् गौरवम् अस्ति ! भवान् तु गजपतिना दत्तं सर्वं स्वीकृत्य अस्माकम् आस्थानस्य गौरवं नाशितवान् अस्ति'' इति निष्ठुरतया उक्तवान् ।

तदा योगीन्द्रः उक्तवान् - ''देव ! भवान् अन्यथा चिन्तयन् अस्ति । अहम् अस्माकं राज्यस्य कीर्तिं वर्धितवान्, न तु नाशितवान् । मादृशः कविः स्वस्य आस्थाने नास्ति इत्येव खलु सः मां स्वस्य आस्थानं प्रति आहूतवान् आसीत् ? अतः अहं धन-



कनक-वस्तु-वाहनादिभ्यः अमूल्यवान् इत्येव तस्य अर्थः ननु ? तस्मात् एव विदुरः 'किमपि मास्तु । योगीन्द्रं प्रेषयतु' इति उक्तवान् । ज्योतिषपुरराज्ये मादृशः कविः कोऽपि नास्ति । यदि स्यात् तर्हि अहमपि अस्माकं राज्यं प्रति तम् आनेष्यम् । अतः मम तत्र गमनेन सर्वत्र अस्माकं राज्यस्य कीर्तिः प्रसृता इत्येव अहं भावयामि'' इति ।

''अर्थात् अस्माकं राज्यस्य कीर्तिः भवदवलम्बिता एव इति भवतः आशयः खलु ? तादृशं वचनमेव भवतः अहङ्कारं द्योतयति'' इति उक्तवान् श्रीपतिः ।

''अहङ्कारी कदापि अन्यान् न श्लाघते । अहं ज्योतिषपुरसभायाम् आत्मानं विस्मृत्य गजपतिं श्लाघितवान् अस्मि'' इति उक्तवान् योगीन्द्रः ।

तदा श्रीपतिः इतोऽपि अधिककोपेन उक्तवान् - ''भवान् धनाभिलाषी । धनार्थम् एव भवान् गजपतिं श्लाघितवान् अस्ति'' इति ।

''प्रभो ! मया कृतं गजपतेः श्लाघनं कविता अभवत् । यथा स्वातीनक्षत्रयुक्ते काले वृष्टिबिन्दुः समुद्रे शुक्तौ पतित्वा मौक्तिकं भविष्यति तथा मम कविताः गजपतेः हृदयं प्रविश्य मौक्तिकानि अभवन्'' इति उक्तवान् योगीन्द्रः ।

''धनस्य आशा भवतः यदि न स्यात् तर्हि भवान् किमर्थं मां न श्लाघते ? तादृशी कविता अत्र किमर्थं वा न निस्सरति भवतः मुखात् ?'' इति पृष्टवान् श्रीपतिः योगीन्द्रम् ।

''स्वामिन् ! अहं सर्वत्र विना भेदेन कविताः वदामि एव । अस्माकं राज्ये अपि मम कवितायाः बिन्दवः पतिताः । ज्योतिषपुरराज्ये अपि पतिताः । किन्तु अत्र या कविता मया उक्ता सा जले पतितः बिन्दुः इव विलीनः अभवत् । तस्मिन् राज्ये याः कविताः मया उक्ताः ताः शुक्तौ पतिताः जलबिन्दवः इव मौक्तिकानि अभवन्'' इति उक्तवान् योगीन्द्रः ।

योगीन्द्रः महता चातुर्येण गजपति-योगीन्द्रयोः तोलनं कृतवान् आसीत् । तावदेव न, वाक्चातुर्येण श्रीपतौ विवेकम् अपि जागरितवान् आसीत् । अतः तदनन्तरकाले गजपतिः इव एव कलापोषणं कुर्वन् श्रीपतिः सत्कीर्तिं प्राप्तवान् ।





आंग्लान् सम्मुखीकृतवन्तः धीराः - २

# संन्यासिनां विद्रोहः

कथा - मीरा उग्रा ✤ चित्रम् - गौतमसेनः

*१७ शतकस्य अन्तिमभागे गोसायी-गिरि-०इत्यादिपरम्पराणां संन्यासिनां गणाः सेनारूपेण परिवर्तिताा सन्तः लघुराज्यानां परतया युद्धम् आरब्धवन्तः । मोगलसाम्राज्यस्य अधःपतनस्य अनन्तरं देशे असुरक्षतायाः कारणेन शान्तिः न आसीत् । तादृशे अवसरे समाजस्य रक्षणार्थं संन्यासिनः सैनिकरूपेण कार्यं कृतवन्तः ।*

*अपरत्र फकीराः अपि कार्यम् आरब्धवन्तः । स्वकार्येण ते हिन्दूनां मुस्लिंजनानां च स्नेहस्य आदरस्य च पात्रीभूताः अभवन् । आरम्भदिनेषु यद्यपि ते शान्तिं बोधयन्तः आसन्, तथापि गच्छति काले उग्रवादिनः सन्तः ते ''दुर्मार्गिणां, अन्याय्यस्य च दमनाय हिंसा अपि करणीया'' इति बोधितवन्तः ।*

*एवं १८ शतके बिहार्-बङ्गालराज्ययोः एते संन्यासिनः फकीराः च ईस्ट्-इण्डिया-संस्थायाः दुराचारस्य विरुद्धं सङ्घर्षम् आरब्धवन्तः ।*

---

*तादृशेषु गोसायी हिम्मत्गिरिः १७६४ तमे वर्षे अक्टोबर् द्वाविंशतितमे दिनाङ्के प्रवृत्ते बक्सर्युद्धे मीर्खासिमस्य परतया ईष्ट्-इण्डिया-संस्थया सह युद्धं कृतवान् । युद्धे पराजयः प्राप्तः चेदपि -*




*संन्यासिनः संस्थायाः कार्यागाराणाम् उपरि आक्रमणं कृत्वा ततः आयुधानि युद्धोपकरणानि च अपहृतवन्तः ।*





१७७० तमे वर्षे मज्नूनुषानामकः फकीरः पश्चिमबङ्गाले काञ्चन प्रदेशान् स्वायत्तीकृतवान् ।




मज्नूनुषा आंग्लैः सह युद्धं कुर्वन् एव मृतः अभवत् ।



अनन्तरं तस्य पुत्रः बिराघ-अलिः तदीयं कार्यम् अग्रे नीतवान् । भवानी पाठक्, देवी चौधराणी च तस्य सहकारिणौ सन्तौ कार्यं कृतवन्तौ । अग्रे तौ द्वौ अपि महावीरौ इति प्रसिद्धिं गतौ ।



ते सर्वे सम्भूय धनिकान् भूस्वामिनः लुण्ठयन्ति स्म । एकदा -





















अनन्तरं सा कुत्रापि अदृश्या अभवत् । सा कुत्र गता इत्येव केऽपि न ज्ञातवन्तः इत्यतः तस्याः अग्रिमजीवनविषयः अज्ञातः एव आसीत् ।

अनन्तरम् अपि सङ्घर्षः अनुवर्तमानः एव आसीत् । सुसाङ्गप्रदेशे करंषानामकः फकीरः स्वस्य प्रेरकभाषणैः बहून् आकृष्टवान् ।

सः स्वसंस्थायाः ''पागल् पन्थीयाः'' इति नामकरणं कृतवान् । १८१३ तमे वर्षे करंषावर्यस्य मरणानन्तरं तस्य पुत्रः टिप्पूषा पितुः कार्यम् अनुवर्तितवान् ।







१८२५ तमे वर्षे पागल्पन्थीयाः षेर्पूर्भूस्वामिनः गर्जरिपाप्रदेशं स्वायत्तीकृत्य तत्र शासनम् आरब्धवन्तः । वर्षद्वयपर्यन्तं तत् प्रचलितम् ।




१८२६ तमे वर्षे जमालपुरं प्रति महती ब्रिटिष्सेना आगता । ते सैनिकाः परितः वने सर्वत्र टिप्पूषावर्यम् अन्विष्टवन्तः । अन्ते १८२७ तमे वर्षे ते तं बद्धवन्तः। आजीवकारागृहवासविधानेन तं दण्डितवन्तः च ।

विद्रोहे प्रवृत्तानां संन्यासिनां फकीराणां च दमनार्थं ब्रिटिष्शासनेन बहवः योजनाः कृताः । उत्तरभारते सर्वेषु राज्येषु जनानां सामूहिकप्रयाणं ते निषिद्धवन्तः । संन्यासिनाम् एतादृशकार्येण एव प्रेरणां प्राप्य बङ्किम्चन्द्रचटर्जी - **'आनन्दमठनामिकां'** कादम्बरीं रचितवान् । तस्यां कादम्बर्याम् एव स्वातन्त्र्यस्य प्रेरणास्रोतोभूतं **'वन्दे मातरं'** गीतम् अपि अस्ति ।





# महाभारतम्

भीष्मस्य, कृपाचार्यस्य च हितवचनस्य अनन्तरं त्रिगर्तराजः रथबलस्य अधिपतिः सुशर्मा दुर्योधनम् एवम् उक्तवान् - "मित्र ! मत्स्यदेशस्य राजा विराटः अस्माकं देशस्य उपरि बहुवारम् आक्रमणं कृतवान् आसीत् । अधुना तस्य पराक्रमी सेनाधिपतिः कीचकः गन्धर्वैः हतः इति कारणेन मत्स्यदेशः दुर्बलः जातः अस्ति । यदि भवान् इच्छति तर्हि वयं मिलित्वा मत्स्यदेशस्य उपरि आक्रमणं करिष्यामः । कौरवाणां त्रिगर्तानां च बलस्य पुरतः मत्स्यदेशेन निश्चयेन पराजयः अङ्गीकरणीयः एव । ततः यथेष्टं गाः, अन्याः सम्पत्तीः च लुण्ठयितुं शक्नुमः । तेन भवतः बलमपि वर्धिष्यते । अस्माकं देशस्य शत्रुभयम् अपि न भविष्यति" इति ।

सुशर्मणः अभिप्रायं कर्णः अपि पुष्टीकृतवान् ।

तदा दुर्योधनः - "दुःशासन ! भवान् युद्धार्थं सैन्यं सज्जीकरोतु । प्रथमं सुशर्मा त्रिगतसैन्येन सह मत्स्यदेशस्य एकस्मिन् पार्श्वे आक्रमणं कृत्वा गोसमूहम् अपहरिष्यति । अपरस्मिन् दिने वयम् अन्यस्मिन् पार्श्वे आक्रमणं करिष्यामः" इति अनुजम् उक्तवान् ।

निश्चितयोजनानुसारं सुशर्मा बहुल-सप्तमीतिथौ सैन्येन सह जैत्रयात्रार्थं प्रस्थितवान् । अष्टम्यां कौरवाणां सेना अपि युद्धार्थं प्रस्थिता । तावति काले पाण्डवानाम् अज्ञातवासस्य अवधिः अपि समाप्तः आसीत् ।

कीचकस्य मरणेन विराटः बलहीनः जातः अस्ति इति चिन्तयन्ती सुशर्मणः सेना धैर्येण विराटस्य लक्षशः गाः आक्रम्य वशीकृतवती । "त्रिगर्ताः अस्माकं गाः वशीकृतवन्तः सन्ति । तान् सम्मुखीकृत्य



गाः रक्षणीयाः'' इति गोपालकाः आगत्य विराटम् उक्तवन्तः ।

अनुक्षणं विराटः सैन्यम् एकत्रीकृत्य अनुजैः शतानीक-मदिराक्षप्रभृतिभिः सह युद्धाय सिद्धः अभवत् । स्वस्य आधीन्ये विद्यमानाः धर्मराज-भीम-नकुल-सहदेवाः अपि युद्धं कर्तुं समर्थाः इति ज्ञात्वा सः तेभ्यः अपि चतुरः रथान् सज्जीकृतवान् ।

विराटसेनया त्रिगर्तसेनायाः सम्मुखीकरणसमये एव विलम्बः जातः आसीत् । उभयोः सेनयोः मध्ये घोरं युद्धं प्रवर्तमानम् आसीत् । तावति काले अन्धकारः प्रसृतः । तस्मिन् एव समये सुशर्मा युद्धं कुर्वन्तं विराटराजं सजीवं बद्धवान् । विराटराजस्य सेना एतस्मात् भीता । तदा धर्मराजः भीमम् उद्दिश्य - ''अनुज ! स्वपरिचयः अन्यैः यथा न ज्ञायेत तथा व्यवहरन् भवान् त्रिगर्तैः सह युद्धं कृत्वा विराटराजं मोचयित्वा आनयतु'' इति उक्तवान् ।

भीमः अग्रजस्य आदेशानुसारं सुशर्मणा सह युद्धं कृत्वा तं दमयित्वा, बद्ध्वा विराटं च मोचयित्वा आनीतवान् । भीमेण बद्धं त्रिगर्तं सुशर्माणं धर्मराजः तथैव विमुक्तवान् ।

''अहं जयं प्राप्तवान् अस्मि'' इति राजभवनं प्रति वार्तां प्रेषयित्वा विराटराजः त्रिगर्तैः नीतं गोसमूहं यावत् प्रत्यानयन् आसीत् तावता अन्यस्यां दिशि कौरवाः आक्रमणं कृत्वा तत्र विद्यमानाः गाः सर्वाः वशीकृतवन्तः ।

एतां वार्तां ज्ञातवान् गोपालकानां नायकः रथेन विराटनगरं गत्वा राजकुमारेण भूमिञ्जयेन मिलित्वा - ''राजकुमार ! कौरवाः अस्माकं षट्सहस्रं गाः अपहृतवन्तः सन्ति । भवान् महावीरः इति सर्वे राजानः वदन्ति । अतः भवता इदानीम् आगत्य अस्माकं गाः रक्षणीयाः । अपि च कौरवाणां सैन्यं धूलिसात् करणीयम्'' इति विज्ञापितवान् ।

उत्तरकुमारः इति नाम्ना प्रसिद्धः भूमिञ्जयः तदा महिलानां मध्ये उपविष्टः आसीत् । अतः आत्मानं वास्तविकतया एव पराक्रमिणं मन्यमानः सः - ''भोः ! भवता चिन्ता न करणीया । अहं लीलया युद्धं कृत्वा भवतः गाः मोचयिष्यामि । किन्तु युद्धतन्त्रज्ञः कश्चित् सारथिः मम नास्ति । अतः योग्यं सारथिम् अन्विष्य आनयतु तावत्'' इति उक्तवान् ।




तस्मिन् समये उत्तरं परितः विद्यमानाभिः महिलाभिः सह बृहन्नलावेषधारी अर्जुनः अपि आसीत् । सः गणनां कृत्वा ज्ञातवान् यत् अज्ञातवासावधिः समाप्तः अस्ति इति । अतः सः रहसि द्रौपदीम् उक्तवान् - ''प्रिये ! भवती उत्तरकुमारं वदतु यत् अहं कदाचित् अर्जुनस्य सारथिः आसम् । अपि च तस्मात् प्रशंसाम् अपि प्राप्तवान् अस्मि इति'' इति ।

द्रौपदी लज्जया एव उत्तरस्य समीपं गत्वा - ''बृहन्नलां सारथिं करोतु'' इति सूचितवती । बृहन्नला नपुंसकः इति उत्तरकुमारः यदा सन्दिहानः आसीत् तदा द्रौपदी पुनः उक्तवती - ''बृहन्नलायाः सारथ्यम् अस्ति चेत् भवान् निश्चयेन जयं प्राप्स्यति'' इति । तदा उत्तरकुमारः ''अस्तु'' इति अङ्गीकृतवान् ।

पश्चात् अग्रजस्य प्रार्थनानुसारं अनुजा उत्तरा बृहन्नलाम् उपगत्य - ''भवती युद्धे मम अग्रजस्य सारथिः भवतु'' इति प्रार्थितवती ।

अर्जुनोऽपि एतत् अङ्गीकृत्य कौरवैः सह युद्धं कर्तुं सिद्धस्य उत्तरस्य सारथिः भवितुं सज्जः अभवत् । तदा उत्तरा, तस्याः सख्यः च बृहन्नलां निवेदितवत्यः - ''भवन्तौ युद्धे भीष्मद्रोणादीन् सर्वान् जित्वा तेषां मृदूनि वस्त्राणि अस्माकं पाञ्चालिकानां निमित्तम् आनयताम्'' इति ।

तदा अर्जुनः हसन् उक्तवान् - ''उत्तरः जयति चेत् निश्चयेन आनेष्यामि'' इति ।

पश्चात् तयोः रथः प्रस्थितः । उत्तरः अर्जुनम् उक्तवान् - ''बृहन्नले ! अस्माकं रथं शीघ्रम् एव कौरवसेनाभिमुखं नयतु । अस्माभिः अविलम्बेन युद्धे जित्वा गाः मोचनीयाः । राज्यं प्रतिगन्तव्यं च'' इति ।

उत्तरस्य सूचनानुसारम् अर्जुनः रथं वेगेन नीतवान् । यदा तौ श्मशाने शमीवृक्षस्य समीपे गच्छन्तौ आस्तां तदा दूरात् एव समुद्रसदृशी कौरवसेना ताभ्यां दृष्टा । सेनायाः सञ्चारेण उद्गता धूलिः नभोमण्डलम् आवृतवती आसीत् । तत् दृष्ट्वा उत्तरः भयकम्पितः धैर्यच्युतः च अभवत् ।

''अहो ! अहम् एतां सेनां जेतुं शक्नोमि किम् ? देवताः अपि एतां जेतुं न शक्नुवन्ति । मम पिता त्रिगर्तैः सह युद्धार्थं गतः इति कारणेन राजभवने अहम् एकाकी अवशिष्टः अभवम् । भीष्मद्रोणादिभिः सह

विद्यमानान् एतान् अहम् एकाकी सम्मुखीकर्तुं निश्चयेन न शक्नोमि । बृहन्नले ! अनुक्षणं रथं प्रतिनिवर्तयतु'' इति प्रलपन् उक्तवान् उत्तरकुमारः ।

तस्य वचनं श्रुत्वा अर्जुनः - ''राजकुमार ! भयं मास्तु । जयं प्राप्य एव आगमिष्यामि इति भवान् महिलानां पुरतः प्रतिज्ञां कृतवान् अस्ति । यदि पलायनं क्रियते तर्हि शत्रवः भवन्तं दृष्ट्वा उपहसिष्यन्ति । अतः अस्माभिः केनापि प्रकारेण शत्रवः जेतव्याः एव । अहं तु तथैव न प्रतिगमिष्यामि'' इति वदन् रथम् अग्रे नीतवान् ।




तदा उत्तरकुमारः - ''कौरवाः मां दृष्ट्वा हसन्तु, अस्माकं गाः नयन्तु वा । अन्तःपुरस्त्रियः मां दृष्ट्वा हसन्तु नाम । अहं तु युद्धं न करिष्यामि'' इति उक्त्वा रथात् उत्प्लुत्य धनुः बाणान् च क्षिप्त्वा नगराभिमुखं प्रतिधावितवान् ।

''युद्धे जयः न प्राप्यते चेत् मरणं वा प्राप्तव्यम् । किन्तु पृष्ठं प्रदर्श्य युद्धरङ्गात् एवं पलायनं न करणीयम्'' इति वदन् अर्जुनः अपि रथात् अवतीर्य उत्तरकुमारस्य पृष्ठतः धावितवान् । बृहन्नलावेषं धृतवन्तं तम् अर्जुनः इति अजानन्तः कौरवाः उच्चैः हसितवन्तः ।

तदा अर्जुनः उत्तरकुमारं शिखायां गृहीतवान् । ''कृपया मां त्यजतु'' इति याचमानं तम् उत्तरं बलात् रथस्य समीपम् आनीय - ''भोः, भवान् रथं चालयतु । अहं कौरवैः सह युद्धं कृत्वा गाः मोचयिष्यामि'' इति उक्त्वा तम् उन्नीय रथस्य उपरि उपवेशितवान् ।

रथः यदा शमीवृक्षस्य समीपम् आगतः तदा अर्जुनः उत्तरकुमारम् उक्तवान् - ''भोः, भवतः एतानि अस्त्राणि सर्वाणि निष्प्रयोजकानि सन्ति । भवान् एतं वृक्षम् आरोहतु । अस्य उपरि पाण्डवाः स्वस्य अस्त्राणि गोपितवन्तः सन्ति । तेषु अर्जुनस्य गाण्डीवम् अपि अस्ति । वृक्षम् आरुह्य आवरणम् अपसार्यते चेत् भवता सर्वाणि अस्त्राणि दृश्यन्ते । तानि अवतारयतु'' इति उक्तवान् ।

वृक्षम् आरुह्य बन्धं उद्घाट्य अस्त्राणि दृष्ट्वा आश्चर्यचकितः अभवत् उत्तरकुमारः । सः अनुकम्पया उक्तवान् - ''कपटद्यूतस्य कारणतः राज्यभ्रष्टाः पाण्डवाः, द्रौपदी च कुत्र, कथं सन्ति इति न ज्ञायते'' इति ।



अर्जुनः सर्वाणि आयुधानि उत्तरद्वारा रथे स्थापितवान् । "अधुना शत्रून् अहं कथं नाशयामि इति पश्यतु भवान्" इति वदन् अर्जुनः स्वस्य गाण्डीवं हस्तेन स्वीकृतवान् । हस्ते विद्यमानानि कङ्कणानि निष्कास्य केशान् ग्रन्थिरूपेण बद्ध्वा उत्तरदिशि मुखं कृत्वा सः अस्त्राधिदेवताः ध्यातवान् । पश्चात् गाण्डीवस्य ज्यां बद्ध्वा धनुष्टेङ्कारम् उत्पादितवान् । पश्चात् उच्चैः शङ्खध्वनिम् अपि कृतवान् सः । शङ्खध्वनिं श्रुत्वा उत्तरकुमारः एव भीतः अभवत् । तादृशं शब्दं सः ततः पूर्वं कदापि न श्रुतवान् आसीत् ।

स्वसमीपम् आगच्छन्तं रथं दृष्ट्वा द्रोणाचार्यः दुर्योधनम् उक्तवान् - "तत्र आगच्छन् योधः अर्जुनः एव" इति ।

तदा दुर्योधनः सन्तोषेण - "अहो अस्माकं सौभाग्यम् ! अज्ञातवासस्य समाप्तितः पूर्वम् एव अर्जुनः अस्माभिः दृष्टः अस्ति । अतः पाण्डवैः पुनश्च द्वादश वर्षाणि यावत् वनवासः करणीयः" इति उक्तवान् ।

तत् श्रुत्वा द्रोणः उक्तवान् - "यदि अवधिः न समाप्तः स्यात् तर्हि अर्जुनः अस्माकं पुरतः आगतः न अभविष्यत् । अतः अस्माभिः अधुना युद्धविषये प्रथमं चिन्तनीयम् । अर्जुनः तु गाः विना न प्रतिगमिष्यति" इति ।

तदा भीष्मः अपि उक्तवान् - "दुर्योधन ! प्रतिपञ्चवर्षं द्वौ अधिकमासौ भवतः । पाण्डवैः यापितेषु त्रयोदशवर्षेषु पञ्च मासाः द्वादश दिनानि च अधिकानि आगतानि

तदा अर्जुनः - "अहम् एव अर्जुनः । भवतः राज्ञः आस्थाने विद्यमानः कङ्कः एव धर्मराजः । पाचकः वललः एव भीमः । अश्वरक्षकः एव नकुलः । गोपालकः एव सहदेवः । कीचकस्य मरणस्य कारणीभूता सैरन्ध्री एव द्रौपदी" इति उक्तवान् ।

किन्तु आदौ उत्तरः अर्जुनस्य वचने न विश्वसितवान् । तदा अर्जुनः स्वस्य सर्वाणि नामानि उक्त्वा प्रत्येकं नाम कथम् आगतम् इत्यपि विवृतवान् । तदा उत्तरकुमारः अर्जुनं नमस्कृत्य - "भोः, मम भाग्येन एव अद्य मया भवतः परिचयः प्राप्तः । अज्ञात्वा मया अनुचितं किमपि उक्तं स्यात् । तत् सर्वं भवता क्षन्तव्यम् । इतः परं मम भयम् एव न भविष्यति । अधुना रथः कुत्र नेतव्यः ? आदिशतु भगवत्" इति उक्तवान् ।

सन्ति । अतः तानि अविहाय गणयामः चेत् ज्ञायते यत् पाण्डवानाम् अज्ञातवासस्य अवधिः समाप्तः अस्ति इति । तत् ज्ञात्वा एव अर्जुनः युद्धाय आगतः अस्ति । युद्धे जयः वा पराजयः वा इति न ज्ञायते । अतः युद्धं वा करणीयम् । पाण्डवेभ्यः न्याय-सम्मतं राज्यं वा दातव्यम् । एतस्मिन् विषये भवान् अधुना एव निर्णयं करोतु'' इति ।

भीष्मस्य वचनं श्रुत्वा - ''अहं तु पाण्डवेभ्यः राज्यं न दास्यामि । अतः भवन्तः युद्धाय सज्जाः भवन्तु'' इति उक्तवान् दुर्योधनः ।

''तर्हि पादभागं सैन्यं स्वीकृत्य भवान् प्रतिप्रस्थानं करोतु । अन्यत् पादभागात्मकं सैन्यं गाः स्वीकृत्य भवतः पृष्ठतः आगमिष्यति । अवशिष्टार्धसैन्येन सह अहं, द्रोणः, कर्णः, अश्वत्थामा, कृपः च अर्जुनं सम्मुखीकरिष्यामः'' इति उक्तवान् भीष्मः ।

भीष्मस्य सूचना सर्वैः अङ्गीकृता । दुर्योधनः सेनया सह प्रतिप्रस्थितवान् । तदा भीष्मः सैन्यस्य व्यूहं रचयन् केन केन कुत्र कुत्र स्थातव्यम् इति सूचितवान् ।

व्यूहाकारेण स्थितस्य कौरवसैन्यस्य पुरतः अर्जुनस्य रथः आगतः । तदा अर्जुनः उत्तरकुमारम् उक्तवान् - ''बाणप्रयोगार्थं योग्ये स्थले रथं स्थापयतु । सः दुर्मार्गी दुर्योधनः कुत्र अस्ति इति अहम् अवलोकये तावत् । यदि अहं तं जेष्मामि तर्हि सर्वे जिताः इव एव भविष्यन्ति'' इति ।

अर्जुनः उत्तरकुमाराय द्रोणं, भीष्मं, कर्णम्, अश्वत्थामानं, कृपं च दर्शितवान् । किन्तु दुर्योधनः तेन कुत्रापि न दृष्टः तेषां मध्ये ।

पश्चात् दूरे गच्छन्तं दुर्योधनं दृष्ट्वा - ''उत्तर ! दुर्योधनः स्वप्राणान् रक्षितुं गोभिः सह हस्तिनापुरं प्रति प्रस्थितवान् अस्ति । भवान् रथं दुर्योधनस्य दिशि नयतु । अहं तम् अवरुध्य गाः मोचयिष्यामि'' इति उक्तवान् अर्जुनः ।

अर्जुनः सर्वान् वीरान् दृष्ट्वा अपि किमर्थम् अन्यस्याम् दिशि गच्छन् अस्ति इति ज्ञातवान् कृपाचार्यः - ''अर्जुनः दुर्योधनम् आक्रान्तुं गच्छन् अस्ति । दुर्योधनः एकः एव अर्जुनं सम्मुखीकर्तुं न शक्नोति । अतः वयम् अपि तस्य साहाय्यार्थं गच्छाम'' इति उक्तवान् ।



# रसवार्ताः

## चिन्तनशक्तियुक्तः यन्त्रमानवः

जपानदेशस्य सुप्रसिद्धया होण्डासंस्थया पि-२ नामकः यन्त्रमानवः निर्मितः अस्ति । पादपरिमितोन्नतः २१० कि.ग्रां.भारयुक्तः अयं यन्त्रमानवः अन्तरिक्ष-गामिनां वेषभूषणैः उपेतः सन् मनुष्यवत् एव दृश्यते । एषः समतलभूमिषु पुरतः, पृष्ठतः च गन्तुं सोपानानि



आरोढुं च शक्नोति । अन्यैः नुत्तः अपि सः अपतन् तथैव स्थातुं शक्नोति । आवश्यकतायां सत्यां स्वस्य हस्तद्वयम् उपयोक्तुम् अपि समर्थः अस्ति सः । टोकियोविश्वविद्यालयस्य यन्त्रमानवविभागीयया प्राध्यापिकया सुसुमा टोपिवर्यया एषः यन्त्रमानवः सृष्टः अस्ति ।

## विशिष्टा स्मरणशक्तिः

केरलराज्यस्य मञ्जेरिमध्ये सूफिल्नामकः बालकः द्वितीयकक्ष्यायां पठन् अस्ति । मासं दिनाङ्कं च तं वदामः चेत् तस्मिन् दिने वासरः कः इति क्षणाभ्यन्तरे वदति सः । १९९७ तम-वर्षस्य ३६५ दिनानाम् अपि वासरं झटिति एव वक्तुं समर्थः अस्ति सः । तथापि अयं बालः गणिते अधिकबुद्धिमान् तु



न । पठने अपि सामान्यबालेभ्यः मन्दः एव अस्ति एषः । किन्तु एतस्य दिनदर्शिकाज्ञानं तु आश्चर्यजनकम् अस्ति । गृहे, नगरे, राज्ये, राष्ट्रे च प्रवृत्तानां प्रधानघटनानां दिनाङ्कान् निर्दुष्टतया वक्तुं सः समर्थः अस्ति । तस्य इयं स्मरणशक्तिः विशिष्टा आश्चर्यजनिका च अस्ति ।

## पत्रिकासङ्ग्रहालयः (म्यूसियम्)

अमेरिकादेशे आर्मिङ्गटन्मध्ये बालानां निमित्तम् अधुना कश्चन पत्रिकासङ्ग्रहालयः निर्मितः अस्ति । अयं सङ्ग्रहालयः कश्चित् पत्रिकाकार्यालयः इव भासते । तत्र ये गच्छन्ति ते तत्र वार्ताहररूपेण, सम्पादकरूपेण वा कार्यम् अपि कर्तुं शक्नुवन्ति । अपि च तत्रैव विद्यमानानां सङ्गणकयन्त्राणां साहाय्येन पत्रिकां प्रकाशयितुम् अपि शक्नुवन्ति । विश्वस्य विविधप्रदेशेभ्यः आगताभ्यः वार्ताभ्यः अपेक्षितानां वार्तानां चयनेन सम्पादनस्य अनुभवं प्राप्तुम् अपि अर्हन्ति ते । अस्मिन् एव भवने अपरस्मिन् विभागे दूरदर्शनस्य प्रवाचकत्वेन, निरूपकत्वेन च भागं वोढुं, प्रसिद्धपत्रिकासम्पादकैः सह प्रश्नोत्तरकार्यक्रमेषु भागं ग्रहीतुं चापि शक्नुवन्ति ते । क्षणमात्रेण विश्वस्य सार्वकालिकवार्तानां दाने समर्थं सुमहत् यन्त्रम् अपि अस्ति तत्र । यदि कश्चित् स्वस्य जन्मदिनाङ्कं प्रेषयति तर्हि पार्श्वे विद्यमाने दूरदर्शने तेन इष्यमाणायाः तस्य दिनस्य पत्रिकायाः मुखपृष्ठम् दृश्यते !

चन्दमामायाः
अनुबन्धः - १०८



अस्माकं देशस्य
सौन्दर्यस्थानानि

# लेपाक्षीदेवालयः



विजयनगरस्य राजानः दक्षिणभारते अत्यपूर्वया शिल्पकलया विराजमानान् अनेकान् देवालयान् निर्मितवन्तः । तादृशेषु हिन्दुपुरात् १३ कि.मी.दूरे वर्तमानं लेपाक्षीमन्दिरम् अपि अन्यतमम् । इदं १५३७तमे वर्षे निर्मितम् अस्ति ।

विजयनगरस्य राज्ञां कालस्य शिल्पकलायाः इदम् एकम् उत्तमम् उदाहरणम् अस्ति । ''लेपाक्षी'' इति एकस्य विशिष्टशिल्पकलासम्प्रदायस्य नाम अस्ति । अस्य देवालयस्य विषये बह्व्यः कथाः श्रूयन्ते । अयं देवालयः एकस्य लघुपर्वतशिखरस्य उपरि निर्मितः अस्ति । पश्चिमभागे विद्यमानस्य विशालस्य मण्डपस्य स्तम्भेषु विविधाः देवतामूर्तयः चित्रिताः सन्ति । मण्डपस्य अन्तश्छदौ प्रकाशमानैः रक्तपीतहरिद्वर्णैः अनेकानि चित्राणि रचितानि सन्ति । एकया एव शिलया निर्मितः सप्तफणात्मकः सर्पः अपि अत्रत्यः विशिष्टः आकर्षणविषयः अस्ति । कृष्णशिलया निर्मितम् एकं बृहत् शिवलिङ्गम् अस्य देवालयस्य प्राकारे अस्ति । देवालयतः अर्धकिलोमीटर्दूरे प्रसिद्धः लेपाक्षी-नन्दिविग्रहः अस्ति । अयं रक्तशिलया निर्मितः बहु बृहत् एकशिलाविग्रहः अस्ति । अस्माकं देशे विद्यमानेषु नन्दिविग्रहेषु अयम् एव अत्युन्नतः इति सर्वे वदन्ति । अयं विग्रहः अस्माकं शिल्पिनां कौशलस्य प्रकाशकः सन् अपूर्वा कलाकृतिः इति प्रसिद्धः जातः अस्ति ।



# कौशिकः

प्रजानां प्रीतेः आदरस्य च पात्रीभूतः कौशिकः धर्मेण राज्यपरिपालनं कुर्वन् आसीत् । प्रजासु तस्य वात्सल्यम् अधिकम् आसीत् । अतः एव प्रजाः तं विशेषतः इच्छन्ति स्म । आनन्देन राज्यव्यवहारं समाप्य रात्रौ शयनार्थं गमनसमये राज्ञः मुखं म्लानं भवति स्म । स्वदुर्विधिं स्मरन् सः खिन्नः भवति स्म । यतः अर्धरात्रसमये स्वपत्न्याः पुरतः एव सः कुक्कुटरूपेण परिवर्तितः भवति स्म ।

सूर्योदयात् पूर्वम् एव सः पुनश्च पूर्वरूपं प्राप्नोति स्म । अतः एतं विषयं राज्ञ्याः ऋते अन्यः कोऽपि न जानाति स्म ।

एवमेव कानिचन दिनानि अतीतानि । कदाचित् गालवः नाम ऋषिः तौ दम्पती द्रष्टुम् आगतः । राज्ञी तं सत्कृत्य राज्ञः विचित्रां दुःस्थितिं तस्मै निवेद्य - ''कृपया परिहारं सूचयतु'' इति प्रार्थितवती । गालवः नेत्रे निमील्य कञ्चित् कालं यावत् ध्यानमग्नः अभवत् । अनन्तरं सः नेत्रे उन्मील्य - ''वत्से ! भवत्याः पतिः गतजन्मनि कुक्कुटमांसं बहु इच्छति स्म । यद्यपि सः किञ्चिद् एव मांसं खादति स्म, तथापि प्रतिदिनं बहून् कुक्कुटान् मारयति स्म । तेषु रुचिकरं मांसं किञ्चित् खादति स्म । तदा तस्य दुराशां क्रूरतां च दृष्ट्वा कुपितः कुक्कुटनायकः ताम्रचूडः - 'आगामिजन्मनि भवान् रात्रौ कुक्कुटः भवतु' इति शप्तवान् आसीत् । अतः एव महाराजस्य एषा विचित्रा स्थितिः । परमेश्वरम् उद्दिश्य तपः करोति चेत् तस्य अनुग्रहेण भवत्याः पतिः शापमुक्तः भवितुं शक्नोति'' इति उक्त्वा ततः निर्गतवान् ।

अनन्तरं महाराजः कौशिकः परमेश्वरम् उद्दिश्य घोरं तपः कृत्वा तस्य अनुग्रहेण शापमुक्तः अभवत् । अनन्तरं कदापि सः रात्रौ कुक्कुटरूपं न प्राप्तवान् । तदारभ्य परमेश्वरे तस्य भक्तिः अधिका जाता । सः करुणामयस्य परशिवस्य कीर्तिं सर्वत्र प्रसारितवान् ।



# भवन्तः जानन्ति वा ?

## अतिपुरातनः शब्दकोशः






इदानीं विश्वस्य विविधासु भाषासु विभिन्नप्रकारकाः शब्दकोशाः सन्ति । तेषु शब्दानाम् अर्थः उच्चारणविधानम्, उपयोगरीतिः च सोदाहरणं विवृतं भवति । प्रथमः आंग्लकोशः १९९५ तमे वर्षे डा. स्याम्यूल् जान्सन्वर्येण रचितः आसीत् । किन्तु प्राचीनः शब्दकोशः तु चतुर्थे क्रिस्तशतके एव रचितः आसीत् । ५०० पदानां विवरणेन युक्तः एषः कोशः बद्रुद्दीन् इब्राहिं - नामकस्य भारतीयराजस्य साहाय्येन प्रकाशितः अभवत् । वैद्यकीयस्य, भूगोलस्य, कृषेः च शब्दाः प्राणिफलपुष्पादिसम्बद्धाः शब्दाः चापि अत्र सन्ति ।

अस्मात् अपि प्राचीनः कोशः १३ शतके बाग्दादुनगरस्य कस्मिंश्चित् ग्रन्थालये आसीत् इति श्रूयते । किन्तु मङ्गोलियादेशस्य चक्रवर्ती चङ्गेसखानः तं ग्रन्थालयं दग्धवान् । सः ग्रन्थालयः दिनत्रयपर्यन्तं ज्वलन् आसीत् । तत्र विद्यमानाः बहवः अमूल्याः ताडग्रन्थाः नष्टाः अभवन् इति इतिहासे श्रूयते ।

# इन्द्रधनुः





## रेग्गी

सामान्यजनानाम् अपि प्रियः अस्ति रेग्गीनामकः सङ्गीतप्रभेदः । स च १९६०तमे वर्षे वेस्ट्इण्डियन् जनानां वसतिप्रदेशेषु त्वरितमेव प्रसृतम् अभवत् । रेग्गीसङ्गीतवादनं विशिष्टक्रमेण प्रचलति । रेग्गी-सङ्गीतस्य विशिष्टः लयः अपि अस्ति । जमैका-भाषया रचितानि एतानि रेग्गीगीतानि करीबियन्-जनानां जीवनपद्धतिं संस्कृतिं च प्रबोधयन्ति । कानिचन गीतानि पदरहितानि, केवलवाद्यस्वर-युक्तनि च भवन्ति । एतानि डब्रेग्गी इति नाम्ना निर्दिश्यन्ते । रेग्गीडिस्कोकार्यक्रमेषु टिस्क्जाकि-जनाः आदौ डब्रेग्गीं वादयित्वा अनुक्षणमेव तेन सह वेगेन पदानि योजयन्तः गायन्ति । दिवङ्गतस्य बाब् मारलीनामकस्य गायकस्य गणः विश्वे सर्वत्र रेग्गीसङ्गीतस्य प्रसारे कारणीभूतम् अभवत् ।

स्वातन्त्र्यस्य सुवर्णमहोत्सवस्य अवसरे चन्दमामायाः उपहारः

# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*(वाणिज्यार्थं भारतम् आगता ईस्ट्-इण्डिया-संस्था भारतीयराजभ्यः अनुमतिं प्राप्य दुर्गाणि निर्माय कुतन्त्रेण भारतीयराजानाम् एव प्रदेशानाम् अतिक्रमणम् आरब्धवती । दत्तकपुत्रस्य राज्याधिकारः नास्ति इति नियमं कृत्वा मराठपेश्वेबाजीरायस्य दत्तकपुत्रस्य नानासाहेबस्य राज्याधिकारं निराकृतवती । 'झान्सीमहाराजः निरपत्यः मृतः इति कारणेन तस्य राज्यम् अपि मदधीनं स्यात्' इति सा उद्घुष्टवती । एतेन राज्ञी लक्ष्मीबायी क्रुद्धा सिंही इव अभवत् । एतादृशैः व्यवहारैः जनेषु संस्थायाः विषये तिरस्कारभावः, विरोधः च उत्पन्नः । तदनन्तरम् ......)*

सा काचित् पूर्णिमायाः रात्रिः । तस्मिन् समये सुन्दरं वेषभूषं, रत्नयुक्तम् उष्णीषं च धृतवान् कश्चित् चतुरमतिः युवकः अश्वम् आरुह्य मीरत्नगरस्य सीमायां विद्यमानं गङ्गायाः तीरं प्रति आगतः । सः तत्र एकस्य वटवृक्षस्य समीपे अश्वात् अवतीर्णवान् ।

तस्य आगमनस्य समनन्तरं परितः विद्यमानेभ्यः गुल्मेभ्यः पञ्चविंशत्यधिकाः सैनिकाः बहिः आगत्य तं नमस्कृत्य स्थितवन्तः । तेषु अन्यतमः - ''पेश्वेवर्यस्य स्वागतम्'' इति उक्तवान् । तदा अन्ये अपि तदेव वाक्यम् अनूच्चारितवन्तः ।

''प्रियभ्रातरः ! भवतां अभिमानः मम प्रियः एव । तथापि व्यर्थवचनेषु, औपचारिके आदरप्रदर्शने च मम विश्वासः नास्ति इति कारणेन अहं भवतां नायकः भवितुं न इच्छामि । अतः यदि मयि भवतां अभिमानः स्यात् तर्हि मां नायकपदात् मुक्तं कुर्वन्तु कृपया'' इति तान् सैनिकान् उद्दिश्य

उक्तवान् नानासाहेबः गम्भीरवाण्या ।

''एतान् श्वेतवर्णीयान् वयम् अस्माकं शासकत्वेन न अङ्गीकुर्मः । भवान् एव अस्माकं नायकः । भवतः आज्ञां वयं सर्वे शिरसा पालयितुं सिद्धाः स्मः'' इति उक्तवान् अन्यः सैनिकः ।

''प्रभो ! प्रतिदिनं ते अस्मान् अपमानयन्ति । अस्माकं देवानाम् अपि अपमाननं कुर्वन्ति ते । कदाचित् अस्माकं सुहृत् कश्चित् - 'भोः ! वयं सर्वमतीयान् आदरेण पश्यामः । वयं कदापि भवतां देवं तुच्छत्वेन न दृष्टवन्तः । तथापि भवन्तः किमर्थं अस्मान् अपमानयन्ति ?' इति तेषाम् अर्चकं कश्चित् पृष्टवान् ।

तत् श्रुत्वा सः किमपि उत्तरं न उक्तवान् । प्रत्युत सैनिकानां द्वारा तं सम्यक् वेत्रेण तावत् प्रहारितवान् यावत् तस्य शरीरं व्रणितं सत् रक्तसिक्तं जातम् । अन्ते सः प्रज्ञाहीनः सन् पतितवान्'' इति उक्तवान् अपरः सैनिकः ।

''उदरनिमित्तं वयं तेषां सैन्यं प्रविष्टवन्तः स्मः । अस्मासु केचन स्वशक्त्या सामर्थ्येन च सैन्ये अधिकारिणः सञ्जाताः सन्ति । किन्तु तेभ्यः तेषां समानस्तरीयेभ्यः श्वेतवर्णीयेभ्यः दीयमानस्य वेतनस्य पादभागः अपि न दीयते । अयं कीदृशः न्यायः ? एतादृशम् अन्याय्यं वयं कियत्कालं सोढुं शक्नुयाम ?'' इति उक्तवान् अन्यः सैनिकः किञ्चित् उद्वेगेनैव ।

''अधुना अन्यत् अपि कष्टम् आपतितम् अस्ति । नूतनं गुलिकास्त्रम् उपयोक्तव्यम् अस्ति अस्माभिः । तत्समये गोः, वराहस्य च मेदसा लिप्ता गुलिका दन्तैः दंष्टव्या भवति । तथा करणेन हिन्दवः मुसल्मानाः च धर्मभ्रष्टाः भविष्यन्ति'' इति उक्तवान् चतुर्थः सैनिकः खेदेन ।

''मङ्गलपाण्डेवर्यस्य आत्मा प्रतिदिनं





रात्रौ अस्मान् आवृत्य पीडयति । सः धैर्यशाली सज्जनः च आसीत् । परं सः सहसा प्रवृत्तवान् आसीत् । 'श्वेतवर्णीयेभ्यः मातृभूमिं भवान् कदा विमोचयति ? इतोऽपि कियत्कालपर्यन्तं निद्रा ? इति स्वप्ने वदन् प्रतिदिनं सः मां जागरयति'' इति उक्तवान् अपरः सैनिकः ।

मङ्गलपाण्डेविषयं नानासाहेबः सम्यक् जानाति स्म । बारकपुरस्य मङ्गलपाण्डे अपूर्वधैर्यसाहसवान् आसीत् । तस्य शिबिरे अपि मेदोलिप्ता गुलिका प्रयोक्तव्या इति आज्ञा आगता आसीत् । तदा केचन सैनिकाः - ''तादृशानि गुलिकास्त्राणि मा सन्तु'' इति आंग्लाधिकारिणः प्रार्थितवन्तः । किन्तु अधिकारिणः सैनिकानां प्रार्थनां न परिगणितवन्तः एव । तेन अस्वस्थः मङ्गलपाण्डे निद्रां न प्राप्तवान् रात्रौ । अन्ते अकस्मात् प्रकोष्ठात् बहिः आगत्य - ''आगच्छन्तु सर्वे । वयं मिलित्वा आंग्लानां विरुद्धं व्यवहारं कुर्मः'' इति उच्चैः सर्वान् आहूतवान् । तेन आहूतानां सैनिकानाम् आगमनात् पूर्वम् एव सार्जण्ट्मेजर् हप्सनः मङ्गलपाण्डेवर्यं ग्रहीतुम् उद्युक्तः अभवत् । तदा मङ्गलपाण्डे गुलिकास्त्रेण तं मारितवान् । तावति काले तत्र आगतः अपरः अधिकारी मङ्गलपाण्डेवर्यं खड्गेन प्रहृतवान् । पश्चात् बद्धं तं शूलम् आरोपितवन्तः आसन् ।

सर्वेषां वचनानि श्रुत्वा नानासाहेबः किञ्चित्कालं तूष्णीं स्थितवान् । पश्चात् मौनं भेदयन् - ''भ्रातरः ! मङ्गलपाण्डेवर्याय हृत्पूर्वकाणि नमांसि । तस्य धैर्यं, साहसं, त्यागश्च अस्माकं स्फूर्तिदायकं भवतु । किन्तु तेन यथा कृतं तथा अस्माभिः सहसा कार्यं न करणीयम् । सहसा कार्यकरणेन प्राणत्यागः करणीयः भवेत्, न तु अन्यः लाभः प्राप्येत । अस्माभिः श्वेतवर्णीयानां दास्यात् मुक्तैः भवितव्यम् । तदेव अस्माकं सर्वेषां लक्ष्यम् । यदि वयं सर्वे सम्भूय युगपत् विद्रोहं करिष्यामः तर्हि लक्ष्यं प्राप्तुं शक्ष्यामः । किम् एतदर्थं सर्वे सिद्धाः ?'' इति पृष्टवान् नानासाहेबः ।

''वयं सर्वे सन्नद्धाः'' इति उक्तवन्तः सैनिकाः सर्वे एककण्ठेन ।

''भवतु । विद्रोहस्य दिनाङ्कः निश्चेतव्यः अस्ति । योग्ये समये भवतः सर्वान् सूचयिष्यामः । तावत्पर्यन्तं सहनया स्थातव्यम्'' इति उक्तवान् नानासाहेबः ।

''तावत्पर्यन्तं अस्माभिः कालः व्यर्थं यापनीयः किम् ?'' इति पृष्टवान् कश्चित् ।

''व्यर्थं कालयापनं न करणीयम् , अपि तु तस्य सदुपयोगः करणीयः । भवद्भिः एषः विषयः अन्येभ्यः सैनिकेभ्यः वक्तव्यः । येषां मनः दोलायमानस्थितौ अस्ति ते समाश्वासनीयाः । अपि च अस्माकं पक्षं यथा ते आगच्छेयुः तथा करणीयम् । समये सन्निहिते विद्रोहः कथं करणीयः इति विषये भवद्भिः अपि रहसि उपायाः चिन्तनीयाः सन्ति'' इति उक्तवान् नानासाहेबः ।

सर्वे आनन्देन - ''चिरं जीवतु नानासाहेबः'' इति घोषणं कृतवन्तः ।

''स्थगयन्तु'' इति हस्तेन सूचयन् नानासाहेबः - ''शत्रूणां विषये अस्माभिः लाघवेन न चिन्तनीयम् । सहस्रशः मैल्दूरतः भारतम् आगत्य भूमिम् अतिक्रम्य शासनकरणेन एव ते स्वसामर्थ्यं प्रदर्शितवन्तः सन्ति । तेषां गूढचाराः अस्माकं कार्ययोजनां यथा न जानीयुः तथा अस्माभिः जागरूकता आश्रयणीया । एतत् तु अत्यन्तं प्रधानम्'' इति प्रबोधितवान् ।

पश्चात् सर्वे सैनिकाः शिरसा नानासाहेबं नमस्कृत्य तूष्णीं ततः निर्गतवन्तः ।

एवं नानासाहेबः बहूनि राज्यानि रहसि अटित्वा तत्रत्यैः महाराजैः, अधीनराजैः, अधिकारिभिश्च मिलित्वा प्रवर्तिष्यमाणाय विद्रोहाय तेषां साहाय्यं प्रार्थितवान् । यत्र सः स्वयं गन्तुं न शक्तः तत्र स्वसेनाधिपतिं तात्याटोपेवर्यं, मन्त्रिणम् अजिमुल्लाखानं च प्रेषितवान् । पक्ष्मणी यथा नेत्रे सर्वदा जागरूकतया रक्षतः तथा जागरूकतया तं



रक्षन् आसीत् तस्य अनुजः बालासाहेबः ।

एकदा तौ सहोदरौ यदा चित्तूरुनगरे विद्यमानं राजभवनं गच्छन्तौ आस्ताम् तदा अनुजः - ''अग्रज ! भवान् बहु श्रान्तः अस्ति । भवतः विश्रान्तिः आवश्यकी'' इति उक्तवान् ।

''आं, सत्यम् । अहम् अधुना वसतिं गत्वा विश्रान्तिं स्वीकरिष्यामि'' इति उक्तवान् नानासाहेबः । यदा सः भवनं प्रविशन् आसीत् तदा एव कश्चित् अधिकारी पुरतः आगत्य - ''प्रभो, झान्सीराज्यात् राज्ञी लक्ष्मीबायी भवन्तं द्रष्टुम् आगता अस्ति'' इति उक्तवान् ।

नानासाहेबः विश्रान्तिम् अपि विस्मृत्य अतिशयेन सन्तोषेण प्रासादं प्रविष्टवान् । तदा लक्ष्मीबायी अपि आनन्दातिशयेन

पुरतः आगत्य तस्य पादयोः नमस्कर्तुम् उद्युक्ता अभवत् । तादृशीं तां निवारयन् नानासाहेबः - "किम् अयं स्वप्नः, आहोस्वित् वस्तुस्थितिः ? कथं भवती अत्र आगता ?" इति आश्चर्येण हसन् पृष्टवान् ।

"अग्रज ! भवतः प्रश्नस्य उत्तरं सहस्रशः वर्षेभ्यः पूर्वम् एव सतीदेवी उक्तवती अस्ति । 'आह्वानेन विना कुत्रापि न गन्तव्यम्' इति शिवेन उक्ते सति अपि सा - 'पितृगृहं गन्तुं पुत्र्याः आह्वानस्य आवश्यकता नास्ति' इति उक्तवती । अहम् अपि तथैव चिन्तयामि । मम दृष्ट्या तु पितृगृहं भ्रातृगृहं चेति उभयमपि समानम् एव" इति उक्तवती लक्ष्मीबायी ।

"भगिनि ! भवत्याः एतादृशेन विश्वासेन अहम् आत्मानं धन्यं मन्ये । भवतु । भवती किमर्थम् अत्र आगमनस्य कष्टम् ऊढवती ? भवती वार्ताम् अप्रेषयिष्यत् चेत् अहम् एव आगमिष्यम्" इति उक्तवान् नानासाहेबः ।

"अग्रजस्य दर्शनार्थं गमनम् एव श्रमदायकम् इति यदि भावयेयं तर्हि कथं वा तान् दुष्टान् श्वेतवर्णीयान् सम्मुखीकर्तुं शक्नुयाम् ? भवत्तः एव खड्गयुद्धं, धनुर्विद्यां च अधीतवतीं मां तावतीं कोमलां भावयति किं भवान् ?" इति वदन्ती अकस्मात् परावृत्य दृष्टवती लक्ष्मीबायी ।

तदा कश्चित् दूतः धावन् आगत्य - "प्रभो ! मीरत्मध्ये विद्रोहः आरब्धः अस्ति" इति उक्तवान् ।

"एतावच्छीघ्रम् !" इति आश्चर्येण उक्तवान् नानासाहेबः ।

"आम् । मेदोलिप्ताः गुलिकाः प्रयोक्तव्याः इति आंग्लाः अनुरोधं कृतवन्तः । सैनिकाः तत् निराकृतवन्तः । निराकृतवतः सैनिकान् सर्वान् निगडैः बद्ध्वा आंग्लेयाः कारागृहं नीतवन्तः । दशवर्षात्मिकां कठिनशिक्षां च विहितवन्तः सन्ति ते" इति उक्तवान् दूतः ।

"अग्रे किम् अभवत् ?" इति पृष्टवान् नानासाहेबः ।

"तदनन्तरदिने अवशिष्टाः सैनिकाः सर्वे सम्भूय विद्रोहं कृतवन्तः । ते बद्धान् सर्वान् सैनिकान् विमोचितवन्तः सन्ति । श्वेतवर्णीयानां गृहाणि अग्निना दग्धवन्तः सन्ति । मीरत्नगरमेव अधुना बहुप्रक्षुब्धस्थितौ अस्ति" इति उक्तवान् सः दूतः ।





# किं पुण्यदायकम् ?

गृहकार्याणि सर्वाणि समाप्य कमला सायङ्काले मल्लिकाकलिकाभिः मालां रचयन्ती गृहस्य पुरतः उपविष्टा आसीत् । तदा कश्चन अश्वशकटः गृहस्य पुरतः आगत्य स्थितः । प्रकाशमानां कौशेयशाटिकां कण्ठे बहूनि आभरणानि च धृतवतीं शकटात् अवतरन्तीं विमलां दृष्ट्वा आश्चर्यचकिता अभवत् कमला ।

कमला विमला च यातरौ । मातापित्रोः मरणानन्तरं भ्रात्रोः कलहः उत्पन्नः आसीत् । पश्चात् तौ सम्पत्तिं विभज्य पृथक् वासम् आरब्धवन्तौ आस्ताम् । विमलायाः पतिः विमार्गेण धनं सम्पाद्य वर्षचतुष्टयाभ्यन्तरे एव तस्मिन् नगरे विद्यमानेषु धनिकेषु अन्यतमः जातः आसीत् । उत्तमगुणान् परित्यक्तुम् अशक्तः कमलायाः पतिः सामान्यस्थितौ एव आसीत् । कृष्या वाणिज्येन वा अधिकं सम्पादयितुं न शक्तः आसीत् सः ।

काले गते धनिका विमला कमलायाः गृहं प्रति आगमनम् एव स्थगितवती आसीत् । तादृशीम् अकस्मात् आगतां विमलां दृष्ट्वा कमला सहजतया आश्चर्यचकिता जाता । आगतां यातरम् उद्दिश्य - ''आगच्छतु । चिरात् दर्शनं भवत्याः'' इति वदन्ती स्वागतीकृतवती ।

विमला कमलां, तस्याः गृहं च उपेक्षया दृष्ट्वा उक्तवती - ''सर्वं कुशलं खलु ? इदमिदानीं नवीकृतं कामाक्षीमन्दिरम् अधुना बहु सुन्दरं जातम् अस्ति इति श्रूयते । तत् द्रष्टुं गच्छन्ती अस्मि । भवती आगच्छेत् चेत् नयामि इति आगता'' इति ।

''निश्चयेन आगच्छामि'' इति उक्त्वा कमला अन्तः गत्वा पञ्चसु निमेषेषु एव सज्जा सती आगतवती । उभे अपि शकटम् आरूढवत्यौ । नगरस्य कोणे विद्यमानं



देवालयस्य प्राप्तिसमये अन्धकारः प्रसरन् आसीत् । वर्णरञ्जितैः विद्युद्दीपैः देवालयः प्रकाशमानः आसीत् ।

आगतां विमलां दृष्ट्वा देवालयस्य धर्मदर्शी स्वयम् आगत्य स्वागतीकृतवान् । देवालयस्य पुरतः भित्तौ स्थितायां अमृत-शिलायां विमलायाः नाम सुन्दरतया उल्लिखितम् आसीत् । स्वनाम कमलां प्रदर्शयन्ती विमला गर्वेण उक्तवती - ''अहं षष्टिसहस्त्रं रूप्यकाणि व्ययीकृत्य देव्यै मेखलां कारितवती । अतः एव मम नाम अत्र विशेषरूपेण लिखितम् अस्ति'' इति ।

'एतदर्थम् एव विमला मां देवालयम् आनीतवती' इति कमला अवगतवती । देवालयस्य गर्भगृहं प्रविशन्ती विमला पुनश्च कमलाम् उक्तवती - ''इदं जीवनम् नश्वरम् । कालः कदा अस्मान् नयति इति वयं न जानीमः । किन्तु एतादृशैः कार्यैः एव अस्माकं नाम चिरं स्थास्यति'' इति ।

तदा देवालयस्य धर्मदर्शी उक्तवान् - ''आर्ये, युक्तम् एव उक्तं भवत्या । भवत्याः याता अपि देव्यै कुण्डले कङ्कणानि च कारयित्वा ददाति चेत् तस्याः नाम अपि भवत्याः नाम्नः पार्श्वे एव लेखयिष्यामि । तदर्थं प्रायः पञ्चाशत्सहस्त्रं रूप्यकाणि भवेयुः'' इति ।

तदा कमला - 'आगामिमासे धान्यस्य विक्रयणेन अस्माभिः पञ्चविंशतिसहस्त्रं रूप्यकाणि प्राप्स्यन्ते । कथञ्चित् पत्युः अङ्गीकारं प्राप्य देवालयाय तावत् धनं दत्त्वा विमलायाः नाम्नः पार्श्वे एव मम नाम अपि लेखयिष्यामि' इति चिन्तयित्वा धर्मदर्शिनम् उद्दिश्य उक्तवती - ''श्रीमन् ! अहं तावन्तं व्ययं कर्तुं न शक्नोमि । अतः पञ्चविंशतिसहस्त्ररूप्यकैः देव्यै एकं हारं कारयित्वा दातुं शक्नोमि'' इति ।

तदा विमला अनुक्षणं तम् उद्दिश्य - ''भोः, तदा भवता मम यातुः नाम सुन्दरतया मम नाम्नः अधः लेखनीयम्'' इति 'मम नाम्नः अधः' इत्येतत् अधिकस्वराघातपुरस्सरम् उक्तवती ।

पश्चात् विमला प्रतिगच्छन्ती कमलां तस्याः गृहस्य पुरतः अवतार्य स्वगृहं प्रति गतवती एव ।

केषाञ्चित् दिनानाम् अनन्तरं धान्यस्य विक्रयणेन कमलायाः पतिः धनं प्राप्तवान् । अनन्तरदिने एव तस्य पितृव्यः ग्रामात् तयोः गृहम् आगतवान् । पतिः एव तम् आगन्तुं

सूचितवान् इति ज्ञात्वा कमला पतिम् उक्तवती - "भोः, अधुना किमर्थं पितृव्यम् आहूतवान् भवान् ? तस्य आरोग्यमपि सम्यक् नास्ति खलु ?" इति ।

"तस्य आरोग्यं सम्यक् नास्ति इत्यतः एव अहं तं चिकित्सार्थम् आहूतवान् अस्मि । यदि तस्य किमपि भवेत् तर्हि तदीयं कुटुम्बं निर्गतिकं भविष्यति । तस्य तु तिस्रः पुत्र्यः सन्ति । तासु ज्येष्ठायाः विवाहः निश्चितप्रायः अस्ति । विवाहावसरे दशसहस्रं रूप्यकाणि वरदक्षिणारूपेण दातव्यानि सन्ति । अतः अहं 'धनं ददामि' इति उक्तवान् अस्मि । सः यदा शक्नोति तदा तत् धनं प्रत्यर्पयिष्यति" इति उक्तवान् कमलायाः पतिः ।



तत् श्रुत्वा कमला - "साधु, साधु । भवान् दानशूरकर्णः इति अहं जानामि । परम् अस्मिन् वर्षे धान्यस्य धनं मह्यम् आवश्यकम् । अन्यस्मै तस्य दानम् अहं न अङ्गीकरोमि" इति कोपेन उक्तवती ।

"तावत् धनं स्वीकृत्य भवती किं करोति ?" इति पृष्टवान् पतिः ।

"अहं देव्यै कामाक्ष्यै एकं हारं कारयित्वा दत्त्वा देवालये विमलायाः नाम्नः पार्श्वे मम नाम अपि लेखयितुम् इच्छामि" इति वदन्ती कमला पूर्वं प्रवृत्तं सर्वं पतिं विस्तरेण निवेदितवती ।

"देव्याः कण्ठे हारः न भवति चेत् न काऽपि हानिः । किन्तु पितृव्यस्य पुत्र्याः कण्ठे मङ्गलसूत्रं तु भवेत् एव । नाम्नः लेखनं शिलायाः उपरि न, अपि तु जनानां हृदये स्यात् । यदि वयं साहाय्यं करिष्यामः तर्हि साहाय्यस्वीकर्तारः प्रतिदिनं स्वस्य गृहेषु अस्माकं नाम स्मरन्तः दीपं ज्वालयिष्यन्ति" इति पत्नीं बोधितवान् कमलायाः पतिः ।

किन्तु दुराग्रहवती कमला कोपेन पतिम् उक्तवती - "भवान् यत्किमपि वदतु नाम, अहं न शृणोमि । देवालयस्य देव्याः सेवया पुण्यं न लभ्यते इति केन उक्तम् ?" इति । एवं सम्भाष्य यदा तौ बहिः आगतौ तदा कमलायाः पत्युः पितृव्यः गतः आसीत् । तत् दृष्ट्वा - "आवयोः सम्भाषणं श्रुत्वा मम पितृव्यः खिन्नः सन् गतवान् इति भावयामि" इति दुःखेन उक्तवान् कमलायाः पतिः ।

"सः गच्छतु नाम । ततः अस्माकं काऽपि हानिः न अभवत् । अद्य सायङ्काले एव देवालयं गत्वा धनं दत्त्वा आगमिष्यामि

लड्डुकानि च वितरणीयानि सन्ति । भवती जानाति एव यत् मम कियत् सामर्थ्यम् अस्ति इति'' इति उक्तवती ।

तदा कमला ताम् उक्तवती - ''अम्ब ! भवती एतत् कार्यं सेवार्थं कुर्वती अस्ति खलु ? यदि धर्मदर्शिनं सूचयेत् तर्हि सः भवत्याः नाम अपि अमृतशिलायाः उपरि लेखयेत्'' इति ।

तस्याः वचनं श्रुत्वा वृद्धा हसन्ती उक्तवती - ''भोः ! जीवनं सार्थकं कर्तुं परोपकारकाणि कार्याणि करणीयानि । अमृतशिलायाः उपरि नाम्नः लेखनेन कः लाभः ? अतः यदि कश्चित् पृच्छेत् तर्हि 'कामाक्षी एतत् दत्तवती' इति वदतु । आत्मतृप्त्यर्थम् एव अहम् एतत् कार्यं करोमि, न तु नाम्नः निमित्तम्'' इति ।

वेत्रताडनानि इव स्थितानि तानि वचनानि सहमाना कमला वृद्धां पृष्टवती - ''किं देवालये विद्यमानेभ्यः भक्तेभ्यः एतस्य वितरणं करणीयम् ?'' इति ।

तदा सा वृद्धा उक्तवती - ''न, आदौ देवालयस्य पुरतः विद्यमानेभ्यः बुभुक्षितेभ्यः भिक्षुकेभ्यः एतत् वितरतु । अवशिष्यते चेत् अन्तः विद्यमानेभ्यः भक्तेभ्यः ददातु । आवश्यकता येषाम् अस्ति तेभ्यः दानेन एव खलु पुण्यं लभ्यते ?'' इति ।

अङ्गीकारपूर्वकं शिरः चालयन्ती कमला तस्याः कण्डोलं स्वीकृत्य सर्वं वितीर्य पुनश्च देवालयस्य पृष्ठतः गतवती । तदा वितर्देः उपरि सा वृद्धा न आसीत् । ध्यानं समाप्य प्रतिगन्तुम् उद्युक्तं संन्यासिनं कमला



अहम्'' इति उक्तवती कमला ।

स्वनिश्चयानुसारं सायङ्काले पञ्चविंशति-सहस्रं रूप्यकाणि स्वीकृत्य देवालयं गतवती कमला । ''धर्मदर्शी कस्यचित् कार्यस्य निमित्तं नगरं गतवान् अस्ति, सद्यः एव आगमिष्यति'' इति देवालयस्य अर्चकः कमलाम् उक्तवान् ।

कमला देव्याः दर्शनं कृत्वा देवालयस्य पृष्ठतः गतवती । तावति काले अन्धकारः प्रसरन् आसीत् । विशालनिम्बवृक्षस्य अधः कश्चन संन्यासी तपः कुर्वन् आसीत् । अपरत्र एकत्र वितर्देः उपरि काचित् जर्जरितदेहा वृद्धा उपविष्टा आसीत् ।

सा आगतां कमलां स्वसमीपम् आहूय - ''पुत्रि ! मम साहाय्यं करणीयं भवत्या । अस्मिन् कण्डोले विद्यमानं चित्रान्नं

पृष्टवती - ''अत्र काचित् वृद्धा आसीत् खलु ? सा कुत्र ?'' इति ।

''सा कथम् आसीत् ? सुवर्णवर्णा, रक्ततिलकयुक्ता रक्तशाटिकाधारिणी च आसीत् किम् ?'' इति पृष्टवान् संन्यासी ।

''आम् । मम नाम कामाक्षी इति तया एव उक्तम्'' इति उक्तवती कमला ।

''हे अम्ब ! निश्चयेन भवती पुण्यवती एव । साक्षात् देवीं कामाक्षीं दृष्टवती अस्ति भवती । द्वित्राः एव ताम् एतेन रूपेण दृष्टवन्तः सन्ति । अहम् अहर्निशं तस्याः एव ध्यानं करोमि । तथापि तादृशं सौभाग्यं मया न प्राप्तम् । देव्याः दर्शनं प्राप्तवती भवती निश्चयेन भाग्यवती'' इति उक्त्वा तां नमस्कृत्य ततः गतवान् ।

तस्य वचनं श्रुत्वा कमला अवर्णनीयेन आनन्देन पुलकिता अभवत् । वृद्धायाः वचनानि एव तस्याः कर्णयोः प्रतिध्वनन्ति स्म । सा अनुक्षणं ततः प्रस्थाय गृहम् आगतवती । प्रवृत्तं सर्वं पतिं निवेद्य, धनं तस्य हस्ते दत्त्वा - ''भोः, एतत् धनं भवतः पितृव्यस्य चिकित्सार्थं तत्पुत्र्याः विवाहार्थं च उपयोक्तव्यम्'' इति उक्तवती ।

पश्चात् द्वित्राः मासाः अतीताः । कमलायाः पतिः पितृव्यपुत्र्याः विवाहस्य आह्वानपत्रिकां स्वमित्रस्य मातापितृभ्यां यच्छन् उक्तवान् - ''शुभवार्तां निवेदयितुं भवद्भ्याम् एनाम् आह्वानपत्रिकां यच्छन् अस्मि । किन्तु भवद्भ्यां तत्र न आगन्तव्यम् । यतः भवन्तौ आगतौ चेत् संन्यासी, देवी कामाक्षी च भवन्तौ एव आस्ताम् इति मम पत्नी अभिज्ञास्यति । नाम्नः निमित्तं कार्यं न करणीयम्, अपि तु अर्हाणाम् साहाय्याकांक्षिणां निमित्तमेव कार्यं करणीयम् इति यः उत्तमः विचारः तया अवगतः अस्ति सः इतः परम् अपि तस्याः मनसि भवेत् इति मम इच्छा'' इति ।

तदा तौ - ''देव्याः नाम्नि आवां पापम् आचरितवन्तौ वा इति भयं भवति कदाचित्'' इति उक्तवन्तौ विवाहस्य आह्वानपत्रिकां पश्यन्तौ ।

''सहस्रम् असत्यानि उक्त्वा वा एकः विवाहः करणीयः इति एकम् आभाणकं भवन्तौ जानीतः एव । अतः भवद्भ्यां पुण्यमेव प्राप्यते । चिन्ता न करणीया'' इति कमलायाः पतिः हसन् उक्तवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां फेब्रवरी - १९९८ मासे प्रकटयिष्यामः ।


MAHANTESH C. MORABAD


MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

**'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **व्यायामं कुर्वतोः आवयोः नास्ति बन्धः ।**

द्वितीयचित्रम् - **बन्धनस्थायाः अपि मम सन्तोषे नास्ति बाधा ।।**

प्रेषकः - एस्. बि. केम्भावी, टूल् रूम्, एम्.टि.पि.फ्याक्टरी, अम्बरनाथ, थाने - ४२१ ५०२.


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Pvivate Ltd., Chandamama Building, Chennai- 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K.Salai. Vadapalani, Chennai- 600 026 (India) Editor : NAGI REDDI.

THE MOST ENDEARING GIFT YOU CAN THINK OF
FOR YOUR NEAR AND DEAR WHO IS FAR AWAY

# CHANDAMAMA




**Give him the magazine in the language of his choice—**
Assamese, Bengali, English, Gujarati, Hindi, Kannada,
Malayalam, Marathi, Oriya, Sanskrit, Tamil or Telugu
**—and let him enjoy the warmth of home away from home.**

**Subscription Rates (Yearly)**

**AUSTRALIA, JAPAN, MALAYSIA & SRI LANKA**

By Sea mail Rs. **129.00** By Air mail Rs. **276.00**

**FRANCE, SINGAPORE, U.K., U.S.A.,**
**WEST GERMANY & OTHER COUNTRIES**

By Sea mail Rs. **135.00** By Air mail Rs. **276.00**

**Send your remittance by Demand Draft or Money Order favouring**
**'Chandamama Publications' to:**

CIRCULATION MANAGER **CHANDAMAMA PUBLICATIONS** CHANDAMAMA BUILDINGS
VADAPALANI CHENNAI - 600 026

CHANDAMAMA (Sanskrit) December 1997 Regd. No. TN / MS (S) 302/97
Registrar of News Papers, India. RN 42664 / 85